THE LAST CENTURY'S HALL OF FAME
IS STUDDED WITH MANY A NAME
OF A GREAT ONE WHO DREAMED AND DID
AND WHO LIKE YOU WAS ONCE A KID...



MARTIN SHOWED
MIGHT ISN'T RIGHT

THOMAS INVENTED
THE ELECTRIC LIGHT

MOHANDAS SET HIS PEOPLE FREE

THE LUMIERE BOYS SHOT THE FIRST MOVIE

NELSON TOOK
HIS NATION FAR

HENRY MADE
A MOTOR CAR



CASSIUS PROVED
HE WAS THE BEST

EDMUND CLIMBED
MT. EVEREST



TERESA EASED THE
SICK MAN'S WOES

BILL GAVE THE
WORLD WINDOWS



I.T. Kids

GROWING UP WITH COMPUTERS

SO DECIDE NOW, WHAT ARE YOU GOING TO DO?
THIS NEXT CENTURY BELONGS TO YOU

TAKE THE FIRST STEP, STRONG AND SURELY
REMEMBER IT'S ALWAYS GOOD TO START EARLY!

**I.T.KIDS wishes all 4 to 14 year olds a very Happy New Year**

**I.T.KIDS centres in TAMIL NADU - Chennai :** • Anna Nagar, Ph: 6285959/6285599 • Adyar, Ph: 4415866/5867 • Abhiramapuram, Ph: 4995942 • Alwarthirunagar : Ph: 4841636 • Chrompet, Ph: 2347922 • Kilpauk, Ph: 6415516 • Kodambakkam, Ph: 4804606 • Kotturpuram, Ph: 4422448 • Nanganallur, Ph: 2347922 • Nungambakkam, Ph: 8234900 • Shenoy Nagar, Ph: 6282590/6260834 • SIET College Road, Ph: 4364119 • Thiruvanmiyur, Ph: 4419110 • T. Nagar, Ph: 8217043/8216074 • Vepery, Ph: 6416007/ 6416038 • **Coimbatore:** FIT, Ph: 213080 • KRV, Ph: 433368, 445926 • Precitron, Ph: 315859, 312425 • **Dindigul :** Ph: 432351 • **Erode :** Ph: 262317, 262325 • **Kotagiri :** Ph: 73894 • **Kumbakonam :** Ph: 426090, 421246 • **Nagercoil** : Ph: 60499 • **Ooty :** Ph: 47121 • **Salem :** Ph: 446744 • **Tirupur :** Ph: 743989, 747112• **Trichy :** Ph: 721582 • **Vellore :** Ph: 247913 **KERALA - Ernakulam:** Vinmat, Ph:318008 • Champion Academy, Ph: 371219, 367404 • Triponathura: Cyberkids, Ph: 780839 • **Trivandrum :** Aditya, Ph: 491339, 473994 • KCP, Ph: 337634 • **Trissur:** Kalliath, Ph: 331993 • **Alleppey:** Ph: 262362, 241921 **ANDHRA PRADESH Hyderabad : Malkajgiri :** Ph: 7056678 • **Srinagar Colony :** Ph: 3740647 • **Secunderabad :** Ph: 7897715 • **Vizag :** Ph: 595620 **KARNATAKA - Bangalore :** Basaveswaranagar, Ph: 3223616 • Cooke Town, Ph: 5462738 • Indira Nagar, Ph: 5274930• RT Nagar, Ph: 3338145, 3338146.

# चन्दमामा

सम्पुटः - १५ फेब्रवरी - २००० सञ्चिका - ३



## अन्तरङ्गम्

### कथाः



### ज्ञानप्रदधारावाहिनी



### पौराणिकधारावाहिनी



### पुराणकथा



### ऐतिहासिकविषयाः



### स्थिरशीर्षिकाः



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai - 600 026. Editor : Viswam

## एतस्य अङ्कस्य विशेषाः



सुवर्णसिंहासनम्



कथनात् अपि कष्टकरं सहनम्



प्रथमः स्वातन्त्र्यसङ्ग्रामः

सर्पारिसेवितो देवः शरणम्



THE MOST

**ENDEARING GIFT**

YOU CAN THINK OF FOR YOUR NEAR AND DEAR ONES FAR AWAY



# CHANDAMAMA

GIVE THEM A MAGAZINE IN THE LANGUAGE OF THEIR CHOICE

ASSAMESE, BENGALI, ENGLISH, GUJARATI, HINDI, KANNADA, MALAYALAM, MARATHI, ORIYA, SANSKRIT, TAMIL AND TELUGU

AND LET THEM ENJOY THE WARMTH OF THE HOME AWAY FROM HOME

## SUBSCRIPTION

BY AIR MAIL TO ALL COUNTRIES

Twelve issues Rs. 900

BY SURFACE MAIL WITHIN INDIA

Twelve issues Rs. 120

Send your remittances by Demand Draft or Money Order favouring 'Chandamama India Limited'

to:

PUBLICATION DIVISION

CHANDAMAMA INDIA LIMITED

CHANDAMAMA BUILDINGS, VADAPALANI, CHENNAI-600 026


Editor
VISWAM
Editorial Advisors
RUSKIN BOND
MANOJ DAS
Designing & Technical Advisor
UTTAM



**HEAD OFFICE**

Chandamama Buildings
Vadapalani, Chennai–600 026
Tel : 4841778/4842087
Fax : 4841778
e-mail : chandma@md4.vsnl.net.in

**OTHER OFFICES**

BHUBANESWAR

116-B, B.D.A. Duplex House
Baramunda
Bhubaneswar-751 003
Orissa. Phone: 550 534

DELHI

Flat No. 415, 4 th Floor
Pratap Bhawan
5, Bahadurshah Zafar Marg
New Delhi-110 002.
Phone: 3353406/7

MUMBAI

2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 3889763-3886324-3877110
Fax: 3889670


**For USA**
**Single copy $2**
**Annual subscription $20**



संस्थापकः – **'चक्रपाणिः'** सञ्चालकः – **'नागिरेड्डी'**

# मानुषराक्षसानां पैशाचिकी वृत्तिः

क्रिसमस्पर्व शान्तिं सन्तोषं च निमित्तीकृत्य प्रवर्तते । तस्य सन्देशं विडम्बयन्तः इव केचन धूर्ताः सद्यःकाले काट्मण्डूतः देहलीं प्रति गच्छत् विमानयानम् अपहृतवन्तः आसन् । ततः विमानस्य प्रयाणिकानां तद्बन्धुबान्धवानां च महान् क्लेशः जातः । भारतदेशः आतङ्कग्रस्तः जातः। प्रपञ्चस्य अन्येषु अपि देशेषु चिन्ता समुत्पन्ना । अमानवीयम् एतत् विमानापहरणकृत्यं वस्तुतः मानवतायाः एव अपमानाय । त्रयाणां भयोत्पादकानां समर्पणेन भारतदेशः विमानयात्रिणां प्राणान् अरक्षत् । महत्याः विपत्तेः अन्त्यं कल्पितम् । किन्तु मनसः कोणे प्रश्नः उदेति – किम् एतादृशकृत्यानाम् अन्त्यम् अस्ति ? इति ।

भगवान् मानवान् यथा, तथैव राक्षसपिशाचादीन् अपि सृष्टवान् एव । भयोत्पादकाः तु न मानवाः, अपि मानुषरूपिणः राक्षसाः । भर्तृहरिः वदति – 'तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये' इति । अतः भयोत्पादकाः निश्चयेन मानुषराक्षसाः एव ।

भयोत्पादकानां धर्मः, विचारः, व्यवहारः इत्यादयः सर्वे भयोत्पादकतामयाः एव । सङ्कुचिता दृष्टिः, रक्तपिपासुता, विकृतमनस्कता च तेषां सहजगुणः ।

असहायानां जनानां निग्रहणं मारणं वा न पौरुषं द्योतयति । भीरवः एव एतादृशं कृत्यं कुर्वन्ति । असहायजनान् निगृह्य देशनायकान् अवनमय्य इष्टसाधनार्थं यत्नः सर्वथा खण्डनार्हः । एषा पैशाचिकी वृत्तिः कथं वा शोभेत मानवलोके ?

एतस्याः भयोत्पादकवृत्तेः निग्रहणार्थं केनचित् देशेन, कैश्चित् देशैः वा यदि प्रयत्नः क्रियेत तर्हि प्रायः साफल्यं पूर्णतः न प्राप्येत एव । मानवताप्रियैः सर्वैः अपि राष्ट्रैः एतदर्थं सम्भूय प्रयासः विधेयः । प्रपञ्चस्थानां सर्वदेशानां सामूहिकप्रयत्नः एकः एव एतस्य औषधम् । तदर्थम् अयमस्ति सुकालः ।

# वार्ताविशेषाः

## जीविषु अतिप्राचीनाः मीनाः एव !

भगवतः अवतारेषु मत्स्यावतारः एव प्रथमः इति वदन्ति भारतीयपुराणानि । आधुनिकः विकासवादः अपि अभिप्रैति यत् सस्यानां सृष्टेः अनन्तरं जलचराः एव उत्पन्नाः लोके इति ।

किन्तु, प्रश्नः उदियात् – मत्स्यः कदा उत्पन्नः स्यात् ? इति । एषु दिनेषु चीनादेशे प्राप्ताः मीनयोः अवशेषाः ज्ञापयन्ति यत् तौ मीनौ




५३०० लक्षवर्षेभ्यः पूर्वं जीवितवन्तौ इति । तयोः मीनयोः परस्परसाम्यं नास्ति । तदाधारेण वैज्ञानिकाः ऊहन्ते यत् ततोऽपि पूर्वं तयोः परस्परसाम्ययुक्ताः पूर्वजाः मीनाः आसन् इति । अतः ५ लक्षाधिकवर्षेभ्यः पूर्वं मीनानां जन्म आरब्धं स्यात् इति तर्क्यते ।

## प्राणापहारकः अस्माकं मध्ये एव

वायुमालिन्यं प्रतिवर्षं लक्षाधिकजनानां प्राणान् अपहरति इति ज्ञापयति विश्व-स्वास्थ्यसङ्घेन कृतं सर्वेक्षणम् ।

अतः प्रियबान्धवाः ! भवन्तः परिचितान् एतद्विषये जागरयन्तु कृपया । यत्र यत्र शक्यते तत्र सर्वत्र वायुमालिन्यस्य न्यूनीकरणार्थं प्रयासः विधेयः । केषुचित् देशेषु निवेद्यन्ते यत् यत्र द्विचक्रिकया एव कार्यं साधयितुं शक्यं तत्र



यन्त्रयानस्य उपयोगः निवारणीयः इति ।

## महतः झञ्झावातस्य दुष्परिणामस्य किं कारणम् ?

'ओरिस्साराज्ये सुमहान् झञ्झावातः उत्पन्नः, ततः लक्षशः जनाः प्राणैः वियुक्ताः अभवन्, अपरिमिता हानिश्च सञ्जाता' इत्यादिकं



वयं जानीमः एव । 'झञ्झावातस्य दुष्परिणामस्य निरोधे कोऽपि उपायः अस्ति किम् ? इति चिन्तनं परिशीलनं च कृत्वा केम्ब्रिजीयाः तीराध्ययनसंस्थायाः विषय-परिणताः उक्तवन्तः सन्ति यत् अनुतीरं स्थितम् अरण्यं नाशितं यदि न स्यात् तर्हि एषा अपारा हानिः न अभविष्यत् इति । गतेषु ४० वर्षेषु भारतस्य बहूनि घनारण्यानि निरन्तरं नाशितानि इत्येतत् स्मर्तव्यम् अत्र ।

## एतन्मासे जन्म प्राप्तवन्तः महापुरुषाः

# श्रीमाता

'श्रीमाता' इति शब्दश्रवणेन वयम् अरविन्दो-आश्रमीयां मातरम् एव स्मरामः, या च अरविन्दवर्यस्य कार्यम् अग्रे नीतवती । सा १८७८ तमे वर्षे फेब्रवरीमासे २१ दिनाङ्के प्यारिस्नगरे जाता । बाल्यावस्थायाम् एव सा अवगतवती यत् मम जीवनलक्ष्यं किमपि अन्यत् एव अस्ति इति ।

सा १९१४ तमे वर्षे पाण्डिचेरीम् आगतवती, अरविन्दोवर्येण मिलितवती च । 'मया यस्य अपूर्वचैतन्यस्य मेलनं प्रतीक्षितम् आसीत् तत् एतत् एव' इति सा अवगतवती । अतः १९२० तमे वर्षे पाण्डिचेरीं प्रत्यागता सा पुनः कदापि न प्रतिनिवृत्ता । तस्याः आगमनस्य अनन्तरम् अरविन्दाश्रमः मातुः पोषणात् प्रवर्धमानः बालकः इव एव प्रवृद्धः ।



श्रीयुतस्य अरविन्दवर्यस्य मानवविषयिणी दृष्टिः काचित् अन्या विनूतना च । सः अभिप्रैति - 'मानवः मनसः प्राधान्यम् अङ्गीकृत्य जीवति । किन्तु सः विकासस्य पराकाष्ठाम् अपि प्राप्तुम् अर्हति । सः मनः अतिक्रम्य अपि वर्धनं प्राप्तुम् अर्हति । अद्यतनमानवानां मानसिकः विकासः मानव-परिमितिम् अपि अतिक्रम्य दिव्यमानवत्वं प्राप्तुम् अपि अर्हति इति ।

श्री अरविन्दवर्यः माता च योगसाधनया नवमानवतामार्गस्पष्टीकरणार्थं प्रयत्नं कृतवन्तौ । तयोः अयं प्रयासः चैतन्यक्षेत्रे आसीत् । मानवाः कदाचित् वा चैतन्यस्थायिनीं दशां प्राप्नुयुः इति तयोः सिद्धान्तः ।

श्रीमाता वदति - ''प्रकृत्याम् अभिवृद्ध्यात्मकः कश्चन परिणामः अस्ति, यत्र च शिला वृक्षरूपेण, वृक्षः पशुरूपेण, पशुः मानवरूपेण च परिणतः दृश्यते । एतस्यां परिणामप्रक्रियायां मानवः आत्मानम् उत्कृष्टस्थानीयं परिभावयति । आत्मनः अपि श्रेष्ठं न किञ्चित् अस्ति इति चिन्तयति सः । वस्तुतः तु भ्रान्तः सः । भौतिकदशायां सः अपि कश्चन पशुः एव, किन्तु भाषणसमर्थः, चिन्तनशक्तिमान् च । भौतिकव्यवहारे तस्य प्रवृत्ति-चित्तवृत्त्यादयः पश्वनुगुणाः एव दृश्यन्ते । एतावत् तु निश्चितं यत् प्रकृतिः एतया अपरिपूर्णसृष्ट्या सर्वथा अतृप्ता इति । उत्कृष्टस्य उन्नतस्तरीयस्य सृष्ट्यर्थं सा प्रयतते एव । यः बाह्यस्वरूपेण भौतिकतया मानवरूपेण तिष्ठन् अपि चैतन्यरूपेण प्रवृद्धः सन् अज्ञानम् अतिक्रम्य मानसिकतया उन्नतचैतन्यस्वरूपी भवेत् तादृशं सृजति सा ।''



## धन्यवादाः
## समूहमाध्यमाय !

चन्दमामयाः पुनःप्रकाशनं युवजनानां सन्तोषाय भवेत् एव इत्येतत् तु निरीक्षितम् एव आसीत् । तथैव जातम् अपि । किन्तु अस्माभिः अनिरिक्षितः प्रोत्साहः प्राप्तः समूहमाध्यमतः । आंग्लपत्रिकाः, अन्य-भाषापत्रिकाः च लेखादीनां द्वारा विशेष-प्रसारं दत्तवत्यः । बि.बि.सि., दूरदर्शनमेट्रो ('टि.वि. टुडे' इत्यस्य 'आज् तक्' विभागः) इत्यादयः प्रकाशकानां सन्दर्शनं प्रसारितवन्तः । कथाः, पौराणिकाख्यानानि, प्रश्नावली इत्यादीनां द्वारा उदर्कविषये आस्थाम्, नवसहस्त्रकस्य प्रवेशे उत्साहं च जनयितुं योऽयं प्रयासः चन्दमामया क्रियते सः तैः भूरि प्रशंसितः ।

वयं समूहमाध्यमं कृतज्ञतापूर्वकं स्मरन्तः चन्दमामया सहैव करिष्यमाणायै नवयुग-यात्रायै शुभम् आशंसामः ।

ये असंख्याः पाठकाः, लेखकाः, वितारकाः, प्रतिनिधयः, अन्यसहयोगिनः, अस्मद्हितकाङ्क्षिणः च चन्दमामायाः पुनः-प्रकाशनवार्तां श्रुत्वा झटिति सहायहस्त-प्रसारेण प्रोत्साहितवन्तः तेभ्यः सर्वेभ्यः कृतज्ञताः समर्प्यन्ते अस्माभिः ।

B. Viswanatha Reddy

*प्रकाशकः*

# सर्जनात्मिकाः स्पर्धाः

## चन्दमामा वाचकान् निमन्त्रयति

अधोनिर्दिष्टेषु क्षेत्रेषु कल्पनां विस्तारयितुं सर्जनात्मकसाहित्यं स्त्रष्टुं च....





## छायाचित्रस्य
### अनुशीर्षिकास्पर्धा

**१. चित्रशीर्षिकास्पर्धायाः पृष्टार्थम् –**

केनचित् क्रमेण परस्परं सम्बद्ध चित्रयुगलम् प्रेषयितुम् अर्हन्ति उदीयमानाः चित्रग्राहकाः । चित्रप्रेषणसमये चित्रकारः परस्परसम्बन्धस्पष्टतार्थं स्वस्य आशयम् अवश्यं लिखित्वा प्रेषयेत् ।

**चिताय चित्रयुगलाय**
**रू. ५००/– दीयन्ते पारितोषिकरूपेण**

[illegible] चित्रयुगलं यदाकदाचिदपि प्रेषयितुं शक्यम् ।



२. अधोलिखितां लोकोक्तिं सूक्तिं वा अधिकृत्य स्वकीयम् अनुभवं, लघुकथां (नूतनां प्राचीनां वा) प्रेषयितुम् अर्हन्ति भवन्तः । एतदत्र स्मर्तव्यं यत् लोकोक्तिः सूक्तिः वा यां मूलकल्पनाम् आधारीकृत्य प्रवृत्ता, सा न अङ्गीक्रियते । अतः भवदीया कथा ततः अन्या स्यात् ।

एतन्मासीयस्पर्धार्थं लोकोक्तिः –

**आम्लं द्राक्षाफलम्**

**चितायै रचनायै रू. ५००/– दीयन्ते पारितोषिकत्वेन**

*रचनां प्रेषयितुम् अन्तिमदिनाङ्कः –*

**[illegible], जनवरी – २०००**

पुरस्कृता रचना एप्रिल् – २००० सञ्चिकायां प्रकाशयिष्यते ।

# WAY MAZE

Help Raju monkey find a way to his girlfriend Mini monkey.



# SHOW THE WAY








# Junglee






Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

## CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**




Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.

# 'वेताल-कथा'



## प्रजानां शिक्षणम्

दृढवती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! एतस्मिन् मध्यरात्रे, भूतप्रेतसञ्चारयोग्ये स्थले कस्य उद्देशस्य साधनार्थं भवान् एतावत् भीकरकष्टं सहमानः अस्ति ? भवतः लक्ष्यं भवतः दृष्ट्या अत्युत्तममित्येव भासेत । परन्तु तस्य सफलीकरणार्थं भवता चितः मार्गः किम् उचितः अस्ति ? यतः बहुवारं विवेकिनः अपि 'उत्तमं भविष्यति' इति मत्वा स्वीकृतात् निर्णयात् दुर्गतिं प्राप्तवन्तः भवन्ति । एतस्य उदाहरणरूपेण महाराजस्य जयचन्द्रस्य कथां श्रावयामि । तां कथां श्रद्धया शृणातु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

महेन्द्रगिरिराज्यस्य राजा जयचन्द्रः सकलशास्त्रविशारदः, प्रजानुरागी, उत्तमराज्यपरिपालकः च । एकदा सः मन्त्रिणा धीरवर्मणा सह वेषान्तरं धृत्वा नगरसञ्चारं कुर्वन् आसीत् । तदा कस्माच्चित् गृहात्



आचरणात् प्रीताः देवाः अनुग्रहं कृतवन्तः' इति उक्तवान् गृहस्वामी ।

एतत् दृष्टवतः राज्ञः मनः व्याकुलितम् अभवत् । ततः सः प्रासादं निवृत्य धीरवर्माणम् उद्दिश्य - ''मन्त्रिवर्य ! अस्माकं देशस्य प्रजानां महती मूर्खता अस्ति इति भाति। तस्य मूर्खत्वस्य निवारणम् एव अस्माकम् आद्यं कर्तव्यम् । एतस्मिन् विषये भवतः अभिप्रायः कः ?'' इति पृष्टवान् ।

''मूढसम्प्रदायात् जनाः मूर्खाः जाताः सन्ति । सम्प्रदायानां युक्तायुक्ततां विमृश्य योग्यनियमान् व्यवहारपथम् आनयामः चेत् वरं स्यात्'' इति सूचितवान् मन्त्री धीरवर्मा ।

जयचन्द्रः तस्य सूचनानुसारं नूतनविधीन् कृतवान्। परन्तु एते विधयः जनेभ्यः न अरोचन्त । एते सम्प्रदाय-विरोधिनियमाः इति कारणतः जनाः कुपिताः । ते सर्वे सम्मिल्य विनायकं प्रजाप्रतिनिधिरूपेण राज्ञः समीपं दूतकार्यार्थं प्रेषितवन्तः ।

विनायकः जयचन्द्रं दृष्ट्वा - ''प्रभो ! आ प्राचीनकालात् अस्माभिः आचर्यमाणः सम्प्रदायः दोषयुक्तः इति भवता उक्तम् अस्ति। शीघ्रातिशीघ्रं यदि एतान् विधीन् भवान् न निवारयति तर्हि जनाः विद्रोहार्थम् उद्युक्ताः भविष्यन्ति'' इति जागरणवचनानि उक्त्वा ततः प्रस्थितवान् ।

जयचन्द्रः अत्यन्तं कुपितः जातः । सः विनायकं बन्धुम् उद्युक्तः अभवत् । तदा धीरवर्मा तं सान्त्वयित्वा उक्तवान् - ''प्रभो ! मृगमरीचिकायाः जलं वा पातुं शक्येत । परन्तु मूर्खाणां सम्मुखीकरणं दुस्साध्यम् ।

कोलाहलः श्रुतः । अतः राजा तत्र गतवान् । तत्र दशवर्षीयायाः बालिकायाः गौर्याः आरोग्यं चतुर्भ्यः दिनेभ्यः सम्यक् न आसीत् । सङ्क्रान्तिपर्वकारणतः अनुरोधपूर्वकं स्नानं कारितवन्तः आसन् गृहजनाः । इदानीं तस्याः ज्वरः अधिकः जातः आसीत् । प्रवृत्तं ज्ञात्वा वैद्यः गृहजनान् निन्दन् आसीत् ।

''यदि बालिकायाः आयुः अस्ति तर्हि सा जीवेत् एव । आचारं कदापि न त्यजामः वयम्'' इति उक्तवान् गृहस्वामी ।

वैद्यः गृहस्वामिनः अन्धश्रद्धां निन्दन् वैद्योपचारं कृत्वा - ''अदृष्टवशात् महती विपत्तिः निर्गता'' इति उक्तवान् ।

'विपत्तेः निर्गमनस्य कारणं न अदृष्टम्, अपि च सम्प्रदायस्य आचरणम् । अस्माकम्

विनायकस्य बन्धनं यदि भवति तर्हि सर्वे जनाः उद्विग्नाः भविष्यन्ति । तदा तैः राजविरोधः क्रियते एव'' इति उक्तवान् ।

''तर्हि प्रजानां मूर्खत्वं सहनीयं किम् ? मुग्धजनानां प्राणापायस्य परिस्थितिं दृष्ट्वा अपि तूष्णीं स्थातव्यं किम् ? एतस्य देशस्य महाराजः सन् अहं किमपि कर्तुम् अशक्तः किम् ?'' इति पृष्टवान् जयचन्द्रः ।

धीरवर्मा किञ्चित्कालं चिन्तयित्वा विनायकम् आहूय - ''अस्माकं नूतनविधीनां तात्कालिकनिष्कासनं भविष्यति । प्रथमं भवान् उत्तमरीत्या विद्याभ्यासं करोतु । भवतः विद्याभ्यासः यदा पूर्णः भविष्यति तदा अपि यदि एते विधयः अर्थहीनाः इति भवतः भाति तर्हि तान् निवारयिष्यामः'' इति उक्तवान् ।

विनायकः तत् अङ्गीकृतवान् । पञ्च वर्षाणि यावत् सः अत्यन्तं श्रद्धया विद्याभ्यासं कृतवान् । अनेकनूतनान् विषयान् ज्ञात्वा सः महाराजं द्रष्टुम् आगतवान् ।

''इदानीन्तनः अभिप्रायः कः भवतः ?'' इति पृष्टवान् जयचन्द्रः ।

''सम्प्रदायस्य नाम्नि देशे अनेके निरर्थकाः आचाराः प्रचलन्ति । तान् यावत् न निवारयामः तावत् देशस्य अभिवृद्धिः न भविष्यति'' इति उक्तवान् विनायकः ।

''अहो ! ज्ञातव्यं विचारम् एव ज्ञात्वा आगतवान् अस्ति भवान् । इतःपरं तेषां नियमानाम् अन्वयकरणं भवतः दायित्वम्'' इति ससन्तोषम् उक्तवान् जयचन्द्रः ।

''तस्मात् मम कः लाभः ?'' इति पृष्टवान् विनायकः ।



''भवते योग्यम् अधिकारिपदं दापयामि । मासिकवेतनत्वेन सहस्रं सुवर्णनाणकानि दास्यन्ते'' इति उक्तवान् जयचन्द्रः ।

''प्रभो ! अहम् एतस्य प्रदेशस्य प्रतिनिधिः । भवान् एतस्य देशस्य प्रतिनिधिः अस्ति । मम एव सहस्रसुवर्णनाणकात्मकं वेतनं यदि स्यात् तर्हि भवतः वेतनं कियत् ?'' इति पृष्टवान् विनायकः ।

तस्मात् प्रश्नात् जयचन्द्रः बहु कुपितः जातः । उच्चध्वनिना सः उक्तवान् - ''बहुभ्यः शतकेभ्यः मम पूर्वजाः एतस्य देशस्य परिपालनं कृतवन्तः सन्ति । अहम् एतस्य देशस्य राजा अस्मि । आवयोः तोलनं किं साधु ?'' इति पृष्टवान् ।

तदा विनायकः किञ्चित् विहस्य -



''जन्मतः भवान् राजा । प्रजाभिः प्रतिनिधि-रूपेण चितः अस्मि अहम् । प्रजाः विना चिन्तनं भवति श्रद्धां प्रदर्शयन्ति इत्यतः भवान् राजा जातः । अन्धश्रद्धानां निवारणार्थम् एव भवान् विधीन् कृतवान् । एवं चेत् अन्धश्रद्धा-पोषितं भवदीयं पारम्पर्यशासनं गच्छेत् एव खलु ?'' इति पृष्टवान् ।

जयचन्द्रः दिग्भ्रान्तः जातः । तेन किं करणीयम् इति न ज्ञातम् । सः मन्त्रिणम् आह्वातुं भटं प्रेषितवान् ।

धीरवर्मा आगत्य विषयम् अवगत्य विनायकम् उद्दिश्य - ''भवतः विचारः सकारणः एव अस्ति । एतस्मिन् विषये जनानाम् अभिप्रायः ज्ञातव्यः । यदि तेषाम् अभिप्रायः भवतः अनुकूलकरः भविष्यति तर्हि महाराजः वानप्रस्थाश्रमम् अङ्गीकृत्य भवते सिंहासनं दास्यति । परन्तु अत्र कश्चन नियमः अस्ति यत् अस्माकं देशस्य सर्वेऽपि जना : भवान् इव यदा विद्यावन्तः भविष्यन्ति तदा एव राजा तेषाम् अभिप्रायं पुरस्कृत्य सिंहासनं त्यक्ष्यति'' इति उक्तवान् ।

तत् श्रुत्वा विनायकः - ''सर्वेषां विद्याभ्यासस्य व्यवस्थापनं सामान्यः विचारः न । तत् साध्यं कार्यम् अपि न । अतः अहम् अधिकारी सन् सहस्रं सुवर्णनाणकानि मासिकवेतनरूपेण प्राप्तुम् एव इच्छामि'' इति उक्त्वा ततः प्रस्थितवान् ।

एतत् दृष्ट्वा आश्चर्यचकितः राजा मन्त्रिणम् उक्तवान् - ''भवान् किम् इन्द्रजालं कृतवान् इति न जाने । विनायकः भवद्वचनं मौनेन अङ्गीकृतवान् । परन्तु मम सिंहासन-त्यागविषये भवान् कथं तस्मै वचनं दत्तवान् इति तु आश्चर्यस्य विषयः'' इति ।

''प्रभो ! अविद्यावन्तः मूर्खाः एव भवन्ति । ते मूढसम्प्रदायेषु एव विश्वसन्ति । राजवंशस्थैः एव राज्यपरिपालनं करणीयम् इति चिन्तनं तेषु अन्धविश्वासेषु अन्यतमम् । विनायकः स्वविचारस्य समर्थनं यावत् वा करोतु, जनाः तं राजप्रतिनिधिरूपेण न अङ्गी-कुर्युः एव । एतं विचारं जानन् एव अहं तथा आश्वासनं दत्तवान्'' इति उक्तवान् मन्त्री ।

तदा राजा किञ्चित् चिन्तयित्वा - ''यदि अस्माकं देशे सर्वैः योग्या विद्या लभ्येत तर्हि ते अज्ञानान्धकारात् बहिरागत्य मूढसम्प्रदायान् त्यजेयुः । तदा विनायकः अपि राजा भवितुं शक्नुयात् । सः किमर्थं तथा प्रयत्नं न

कृतवान् ?'' इति पृष्टवान् ।

तत् श्रुत्वा धीरवर्मा हसन् - ''प्रभो ! भवान् सकलशास्त्रपारङ्गतः अस्ति । यदा कदापि भवतः मनसि 'वंशपारम्पर्यशासनम् असाधु' इति भावः आगतः किम् ?'' इति ।

तत् उत्तरं श्रुत्वा जयचन्द्रः चकितः सन् तूष्णीम् आसनात् उत्थाय निर्गतवान् ।

वेतालः एवं कथां श्रावयित्वा - ''राजन् ! विनायकः जनैः चितः प्रतिनिधिः । स्वस्य विद्याभ्यासानन्तरं राजा भवितुं प्रयत्नं कृत्वा अन्ते सहस्रसुवर्णनाणकात्मकं मासिकवेतनम् अङ्गीकृत्य राजास्थाने अधिकारी सन् कार्यं कर्तुं निर्णीतवान् । एवं किमर्थं निर्णीतं तेन ? यदा मन्त्री धीरवर्मा 'पारम्पर्यशासनं मूढ-सम्प्रदायः इति भवतः मनसि आगतं किम्' इति प्रश्नं कृतवान् तदा किमर्थं जयचन्द्रः आसनात् उत्थाय मौनेन निर्गतवान् ? एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति अवदत् ।

तदा त्रिविक्रमः उक्तवान् -''विशेष-विद्याभ्यासं कृतवान् अपि मानवः स्वार्थं न त्यजति । सामान्यविद्या प्राप्ता चेत् ज्ञानं वर्धेत, किन्तु निःस्वार्थादयः गुणाः तु न वर्धन्ते । विनायकः सामान्यविद्यां प्राप्य आगतवान् । अतः एव सः राजत्वं प्राप्तुम् इष्टवान् । 'सर्वान् विद्यावतः करोति चेत् भवान् राजत्वं प्राप्तुम् अर्हति' इति मन्त्री सूचितवान् । 'देशे या सामान्यविद्या अस्ति सा सर्वैः प्राप्ता चेत् राजत्वाकाङ्क्षिणां संख्यायां वृद्धिः भवेत् । ते मम स्पर्धिनः भवेयुः । देशस्य स्थितेः तु परिवर्तनं न भविष्यति । अतः सहस्रं सुवर्णनाणकानि प्राप्य राजोद्योगित्वेन जीवन-यापनम् एव वरम्' इति निश्चित्य विनायकः उद्योगम् अङ्गीकृतवान् । राजा मन्त्रिणः प्रश्नं श्रुत्वा उत्थाय गतवान् यत् तस्यापि कारणम् अस्ति । वंशपारम्पर्येण सिंहासनं यत् प्राप्यते तत्र जनानाम् अन्धश्रद्धा अपि प्रमुखं कारणम् इत्यंशः तेन ज्ञातः आसीत् । अतः एव उत्तरं किमपि अवदन् । सः सम्मतिसूचकं मौनम् अवलम्ब्य ततः उत्थाय गतवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# कथनात् अपि कष्टतरं सहनम्

तस्मिन् वर्षे महती वृष्टिः । सर्वत्र जलमयता ! कुशस्थलीनद्यः उभयपार्श्वे स्थिताः सर्वे ग्रामाः जले निमग्नाः अभवन् । नरेशस्य तु कृषिक्षेत्रं नदीतीरे एव आसीत् । महता परिश्रमेण कृषिं कृत्वा उत्तमायाः फलसमृद्धेः निरीक्षां कुर्वन् आसीत् सः । किन्तु दौर्भाग्यवशात् तदीयं क्षेत्रम् अपि जले निमग्नम् । तावदेव न, गृहम् अपि जले निमग्नम् इत्यतः सः कष्टसागरे पतितः । अन्ते कथमपि सः सपरिवारं प्राणान् रक्षितुं शक्तः अभवत् ।

एषा वार्ता तदीयमित्रेण राधेशेन ज्ञाता । सः नगरात् आगत्य सान्त्वनवचनानि उक्तवान् - ''मित्र ! सर्वं विधिलिखितम् । सम्पत्तिः तु नारिकेलजलवत् मन्दम् अज्ञाततया च आयाति । किन्तु निर्गमनसमये सा गजभुक्तकपित्थवत् झटिति निर्गच्छति । भगवान् एकेन हस्तेन सम्पत्तिं ददाति, अपरेण च प्रतिस्वीकरोति । एषः एव लोकः'' इति ।

निमेषद्वयस्य मौनस्य अनन्तरं नरेशः उक्तवान् - ''भोः, मम सम्पत्तिः नारिकेलजलवत् अज्ञाततया प्राप्ता तु न आसीत् । कानिचन वर्षाणि परिश्रमं कृत्वा ताम् अहं सम्पादितवान् आसम् । येन क्रमेण सा सम्पादिता तेनैव क्रमेण यदि सा अंशतः निर्गता स्यात् तर्हि मम खेदः न अभविष्यत् प्रायः । 'गजभुक्तकपित्थवत्' इति भवता विनायासम् उक्तम् । किन्तु सम्पत्तिनाशात् प्राप्यमाणस्य दुःखस्य सहनं तावत् सुलभं न । 'न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ।' हुँ, सर्वं मम ललाटलिखितम्'' इति ।

राधेशः लज्जया मौनम् आश्रितवान् ।





# सुवर्णसिंहासनम्

पूर्वं दक्षिणभारते कौण्डिन्यः, कालिन्दी, चम्पकः, कुन्दः चेति चत्वारः प्रबल-देशाः, अन्ये षड् लघुराज्यानि च आसन् ।

हैहयवंशीयः सारस्वतः नाम कश्चन महा-बलशाली राजा कौण्डिन्यदेशं परिपालयति स्म । शासनचतुरः सः युद्धं, सन्धिं, मैत्रीं वा अवलम्ब्य दक्षिणभारतस्य सर्वेषां देशानाम् अधिपतिः जातः । न्यायमार्गेण राज्यं परिपालयन् सः विशालस्य दक्षिणापथस्य सार्वभौमः इति ख्यातिं प्राप्तवान् । प्रजाः अपि तस्मिन् विशेषप्रीतिं प्रदर्शयन्ति स्म ।

सुविशालस्य देशस्य अधिपः अपि सारस्वतः सन्तानहीनः आसीत् । दौर्भाग्य-वशात् सन्तानहीनः एव सः परलोकं श्रितवान् । तदनन्तरं तदीयः अनुजः हयग्रीवः सिंहासनम् आरूढवान् ।

हयग्रीवः यद्यपि क्षत्रियकुले जातः, तथापि तस्मिन् क्षत्रियोचिताः शौर्यादयः अल्पप्रमाणेन आसन् । देवेन्द्रः इव राज्यं पालितवतः सहोदरस्य शौर्यस्य शततमः भागः अपि तस्मिन् न आसीत् । एतस्य तात्पर्यम् एतत् न यत् सः गुणहीनः इति । सात्त्विकगुणाः बहवः तस्मिन् आसन् एव । हयग्रीवस्य सात्त्विकतां, शौर्यहीनतां च सम्यक् अवगतवान् आसीत् पुलिन्दभट्टारकः नाम पण्डितः । सः तत्त्वशास्त्रे राजनीतौ च विशेषपरिणतिं प्राप्तवान् आसीत् । काश्यां वसन् दीर्घकालं यावत् विद्याभ्यासं कृत्वा देशाटनं समाप्य



किन्तु इच्छानुगुणं सर्वं न प्रचलति खलु ? दैवनिर्णयः क्वचित् अन्यः एव भवति । एतस्मिन् विषये अपि एवम् एव जातम् ।

कदाचित् हयग्रीवः कैश्चित् सैनिकैः सह मृगयार्थं समीपस्थम् अरण्यं गतवान् आसीत् । तत्र सः एकं हरिणं दृष्टवान् । झटिति सः तं लक्ष्यीकृत्य एकं बाणं प्रयुक्तवान् । किन्तु स च बाणः हरिणे न लग्नः, प्रत्युत लक्ष्यच्युतः अभवत् । अतः हरिणः क्षणमात्रेण उत्प्लुत्य ततः पलाय्य अदृश्यः जातः ।

नितरां निराशः हयग्रीवः यावत् दीर्घं निःश्वसन् आसीत् तावता पृष्ठभागतः केषाञ्चित् अपहासध्वनिः श्रुतः । यद्यपि सः ध्वनिः क्षीणः आसीत् तथापि तं श्रुत्वा हयग्रीवः महान्तं विषादं प्राप्तवान् ।

सारस्वतस्य वार्धक्यकाले तदीये आस्थाने वासम् आरब्धवान् आसीत् सः ।

पुलिन्दस्य शास्त्रज्ञानं राजनीतिकुशलतां च सम्यक् अवगच्छन् हयग्रीवः तं महता आदरेण पश्यति स्म । हयग्रीवस्य गुणशीलतां जानन् पुलिन्दः तं पुत्रवत् महत्या प्रीत्या पश्यति स्म । अतः एव वृद्धः राजगुरुः यदा दिवङ्गतः तदा हयग्रीवः पुलिन्दभट्टारकम् एव राजगुरुपदे उपवेशितवान् आसीत् ।

'हयग्रीवः समर्थतया राज्यपरिपालने विफलः, तत्कारणतः एव सः आत्महीनता-भावम् अनुभवति' इति पुलिन्तः सम्यक् जानाति स्म । 'हयग्रीवः कथञ्चित् सारस्वतः इव कीर्तिमान् भवेत्' इति तस्य इच्छा आसीत् ।

म्लनवदनः सः कोपम् अपि प्राप्य अश्वात् अवतीर्य सर्वान् सैनिकान् परीक्षादृष्ट्या दृष्टवान् । सर्वे सैनिकाः गाम्भीर्येण स्थितवन्तः आसन् । यद्यपि तेषां मुखेषु गाम्भीर्यं दृश्यते स्म, तथापि उपेक्षाभावः ततः अवगम्यते स्म । 'अल्पं हरिणम् अपि मारयितुम् असमर्थः भवान् विशालं साम्राज्यं कथं वा पालयेत्, कथं वा सारस्वतः इव कीर्तिं प्राप्नुयात् ?' इत्येषः भावः तेषां व्यवहारतः स्फुटतया ज्ञायते स्म ।

'एतान् किमपि प्रष्टुम् अपि अहम् अनर्हः' इति चिन्तयन् हयग्रीवः किमपि अवदन् अश्वम् आरुह्य नगरम् अभिलक्ष्य प्रयाणं कृतवान् । राज्ञः एतादृशं व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन्तः सैनिकाः विना वचनं तम्

अनुसृतवन्तः ।

अनन्तरदिने प्रातः ध्याननिरतः पुलिन्द-भट्टारकः दूतमुखात् आघातकरीम् एकां वार्तां प्राप्तवान् । दूतः आगत्य निवेदितवान् यत् – 'महाराजः आकस्मिकमरणं प्राप्तवान् अस्ति' इति ।

एतां वार्तां श्रुत्वा दिग्भ्रान्तः पुलिन्द-भट्टारकः झटिति एव अन्तःपुरं प्रति धावित-वान् । यावत् सः अन्तःपुरं प्राप्तवान् तावता परिवारजनाः सर्वे तत्र सम्मिलिताः आसन् । महाराजस्य आकस्मिकमरणस्य कारणम् अजानन्तः ते सर्वे शोकसागरे निमग्नाः आसन् ।



हयग्रीवस्य अन्त्यसंस्कारादिकं यथायोग्यं कृत्वा महता खेदेन पुलिन्दः यावत् स्वभवनं प्रत्यागतवान् तावता कश्चन दूतः दन्तमयीं काञ्चित् लघुपेटिकाम् आनीय यच्छन् कम्पमानस्वरेण – ''अद्य प्रातः एव महाराजेन एषा भवते प्रेषिता आसीत् । तत्समये भवान् ध्याननिरतः आसीत् । अनन्तरं च त्वरया भवता निर्गतम् । अतः एतत् भवते दातुं न शक्तम्'' इति निवेदितवान् ।

पेटिकां स्वीकृत्य त्वरया उद्घाटितवान् पुलिन्दः । तत्र महाराजेन लिखितम् एकं पत्रम् आसीत् । ततः ज्ञातं यत् महाराजः आत्म-हत्यया इहलोकव्यवहारं समापितवान् इति । एषः विषयः तस्मिन् महतीं व्यथाम् अजनयत् ।

हयग्रीवस्य मरणानन्तरं महामन्त्री त्रिवर्षीयं हयग्रीवपुत्रम् एव अभिषिच्य शासनसूत्राणि स्वयं स्वीकृतवान् । योग्यः नायकः न आसीत् इत्यतः अचिरात् एव देशे सर्वत्र राजविरोधः उत्पन्नः । यावत् हयग्रीवपुत्रः प्राप्तवयस्कः जातः तावता कालिन्दी, चम्पकः, कुन्दः इत्यादयः देशाः स्वतन्त्राः जाताः आसन् । तावदेव न, दक्षिणभारते यानि षट् लघु-राज्यानि आसन् तानि अपि स्वतन्त्रराज्यानि जातानि आसन् । अतः कौण्डिन्यदेशमात्रम् एव हैहयवंशीयानाम् आधीन्ये स्थितम् ।

कौण्डिन्यदेशस्य राजा श्रीदत्तः हैहय-वंशीयेषु दशमः । सारस्वतात् पञ्चमः आसीत् सः । समर्थः प्रजावत्सलः च यथा आसीत्, तथैव सूक्ष्ममनस्कः अपि आसीत् सः । एकं पुत्रं प्रसूय तदधीनं कृत्वा तस्य पत्नी परलोकं गतवती आसीत् । यद्यपि बहवः द्वितीय-विवाहार्थम् अनुरोधं कुर्वन्ति स्म, तथापि



पत्नीं सदा स्मरन् द्वितीयविवाहप्रस्तावं निराकृतवान् । पुत्रस्य शिक्षणव्यवस्था उत्तमा स्यात् इति चिन्तयन् सः दक्षिणापथे अतिप्रसिद्धस्य कृष्णचन्द्रस्य गुरुकुलं प्रति तं प्रेषितवान् आसीत् ।

इदानीं सः एव बालकः विजयदत्तः कौण्डिन्यदेशस्य युवराजः जातः अस्ति । शस्त्रविद्यायां शास्त्रविद्यायां च अप्रतिमः सः प्रजानुरागम् अपि प्राप्तवान् आसीत् । गुरुकुले सर्वे तं विशेषप्रीत्या पश्यन्ति स्म । गुरोः कृष्णचन्द्रस्य तु विशेषप्रीतिपात्रम् आसीत् सः । विजयदत्तस्य विद्याभ्यासः अन्तिमघट्टे आसीत् । 'मासानन्तरं गुरोः अनुमतिं प्राप्य राजधानी प्रतिगन्तव्या' इति सः योजनां कृतवान् आसीत् ।

एतादृशे काले कदाचित् प्रातः कश्चन राजदूतः आगत्य राज्ञा श्रीदत्तेन दत्तम् एकं पत्रं कृष्णचन्द्राय दत्त्वा - 'युवराजः शीघ्रातिशीघ्रं प्रेषणीयः इति महाराजः सूचितवान् अस्ति' इति निवेदितवान् । तेन आनीते पत्रे अपि एतावान् एव अंशः लिखितः आसीत् । कारणं किमपि निर्दिष्टं न आसीत् तत्र ।

कृष्णचन्द्रः झटिति एव विजयदत्तम् आनाय्य पत्रवार्तां निवेद्य - 'प्रयाणार्थं भवान् झटिति सिद्धः भवतु' इति सूचितवान् । एवं सूचना किमर्थं प्रेषिता इति अजानन् विजयदत्तः 'किमपि अनिष्टम् आपतितं स्यात् वा ?' इति चिन्तयन् एव गुरुं नमस्कृत्य गमनार्थम् अनुज्ञां प्राप्य अश्वम् आरुह्य प्रयाणम् आरब्धवान् ।

पुत्रस्य आगमनम् एव प्रतीक्षमाणः आसीत् महाराजः । आगमनवार्तां ज्ञात्वा सः स्वयं द्वारसमीपं गत्वा नमस्कर्तुम् उद्युक्तं पुत्रं गाढम् आलिङ्ग्य अन्तः नीतवान् । एतत्सर्वं कुर्वतः पितुः नेत्रे सजले स्तः इत्येतम् अंशं लक्षितवान् विजयदत्तः चिन्तितवान् यत् मम पिता वर्णनातीते कस्मिंश्चित् महति कष्टे पतितवान् अस्ति इति ।

भोजनानन्तरं विश्रान्तिप्रकोष्ठे स्थितस्य पितुः समीपं गत्वा पृष्टवान् विजयदत्तः - ''त्वरया अहम् अत्र आनायितः यत् तस्य उद्देशः कः ?'' इति ।

श्रीदत्तः क्षणकालस्य मौनस्य अनन्तरं दीर्घं निःश्वस्य कथनम् आरब्धवान् -

''वत्स, विजय ! पूर्वजाः सारस्वत-

वंशीयाः दक्षिणापथस्थानि सर्वाणि राज्यानि जित्वा सार्वभौमत्वं प्रतिष्ठापितवन्तः आसन् इति तु भवान् जानाति एव । तेषां शासनकाले सामन्तराजाः बहवः रत्न-मौक्तिक-माणिक्यादीनि अर्पितवन्तः आसन् । तानि निधिरूपेण अनन्तरजैः रक्षितानि । प्रकृतं तु दक्षिणापथस्थानि सर्वाणि राज्यानि स्वतन्त्राणि जातानि खलु सन्ति ? अद्यावधि कोऽपि राजा अस्मद्देशस्य वशीकरणार्थं प्रयत्नं न कृतवान् आसीत् । अतः सः च निधिः सुरक्षितः आसीत् । किन्तु इदानीं तस्य निधेः वशीकरणार्थं प्रयत्नः आरब्धः अस्ति'' इति ।

''केन वा तथा क्रियमाणम् अस्ति तात ?'' इति महता कुतूहलेन पृष्टवान् विजयदत्तः ।

''एकेन न, अपि तु त्रिभिः सम्भूय यत्नः आरब्धः अस्ति इति वार्ता श्रूयते । दक्षिणापथे ये त्रयः बृहद्देशाः सन्ति तेषां अधिपाः एतद्विषये सम्मिलिताः सन्ति इति वार्ता मया गूढचराणां द्वारा ज्ञाता अस्ति'' इति उक्तवान् श्रीदत्तः ।

''एवम् ! कालिन्दीराजः अपि एतस्मिन् कुतन्त्रे सहभागी किम् ?'' इति आश्चर्येण पृष्टवान् विजयदत्तः ।

''आम्'' इति खेदेन उक्तवान् श्रीदत्तः ।

एतत् श्रुत्वा विजयदत्तः क्षणकालं दिग्भ्रान्तः स्तब्धः च । पितुः एतादृश व्याकुलतायाः कारणं किम् इति स्पष्टम् अवगतवान् सः ।

श्रीदत्तः कथनम् अनुवर्तितवान् - ''सारस्वतवंशस्य सार्वभौमत्वं यद्यपि विनष्टम् आसीत्, तथापि कौण्डिन्याधिपाः अस्मत्पूर्वजाः प्रतिवेशिदेशस्य शत्रुत्वं तु सम्पादितवन्तः न आसन् । मम पिता भगिन्याः इन्दुमत्याः स्वयंवरार्थं सर्वदेशीयान् अपि युवराजान् निमन्त्रितवान् आसीत् ।





स्वंयवरे इन्दुमती कालिन्दीराजकुमारं माधवसेनं वृतवती । पिता तयोः विवाहं सवैभवं निर्वर्तितवान् ।

विवाहानन्तरम् इन्दुमती वधूत्वेन कालिन्दीराज्यं गतवती । कानिचन वर्षाणि सुखेन स्थितवती च । किन्तु दौर्भाग्यवशात् सा अकालमरणं प्राप्तवती । ततः द्वित्रवर्षानन्तरं माधवसेनः अन्यां राजकुमारीं वसुमतीं परिणीतवान् । एषः विवाहः मम प्रयत्नतः एव सम्पन्नः आसीत् । अतः वसुमती मां भ्रातरं भावयति स्म । कालिन्दीराजः माधवसेनः अपि काले काले कौण्डिन्यदेशं प्रति आगच्छन् मैत्रीव्यवहारम् अनुवर्तितवान् आसीत् । 'एकमात्रपुत्री श्रीलेखा भवते दातव्या, ततः सा कौण्डिन्यदेशस्य राज्ञी भविष्यति' इति चिन्तनम् आसीत् वसुमत्याः । तस्याः प्रस्तावं ससन्तोषं स्वागतीकृत्य स्व-सम्मतिं प्रदर्शितवान् आसम् अहम् । सन्तोषेण एव अङ्गीकारं सूचितवान् आसीत् माधवसेनः अपि । एतादृशः सः इदानीं दुष्टतन्त्रस्य सहभागी जातः अस्ति !''

एतावत् उक्त्वा दीर्घं निश्श्वसितवान् श्रीदत्तः । विजयदत्तः महाश्चर्येण चिन्तयति स्म - 'लोके एतादृशाः अपि सन्ति किम् ? महान्तम् उपकारं प्राप्तवता अपि माधवसेनेन कीदृशः विश्वासघातः कृतः !'

चिन्ताक्रान्ततया उपविष्टवन्तं पुत्रम् उद्दिश्य पुनः उक्तवान् श्रीदत्तः - ''वत्स ! दुष्टानां कुतन्त्रस्य वार्ता यदा मया श्रुता तदा झटिति एव अहं सेनापतिना वीरबाहुना सह समालोच्य सर्वत्र गूढचरान् प्रेषितवान् । दशदिनाभ्यन्तरे मया तेषां योजनायाः पूर्णस्वरूपं ज्ञातम् । मया यत् श्रुतम् आसीत् ततः मम महती दिग्भ्रान्तिः जाता ।''

''विषयस्य स्पष्टवगत्यर्थं भवता दक्षिणापथस्य राजकीयस्थितेः स्थूलपरिचयः प्राप्तव्यः । दक्षिणापथे चत्वरि महाराज्यानि । तेषु चम्पकदेशः अन्यतमः । तं मरालभूपतिः पालयति । तस्य पिता चक्रभूपतिः । एषः अग्रजं विषप्राशनेन संहृत्य सिंहासनं स्वयत्तीकृतवान् आसीत् । इदानीं यः मरालभूपतिः सिंहासनम् आरूढवान् अस्ति सः पिता इव एव महादुष्टः । एतस्य उभौ पुत्रौ । तयोः अन्यतरस्य नाम चक्रभूपतिः इत्येव । अयं चक्रभूपतिः पितामहम् आकारेण दुर्गुणेन च पूर्णतः अनुकरोति ।

मरालभूपतेः उभौ अपि पुत्रौ परमदुष्टौ युद्धासक्तौ च । इदानीं तयोः गृध्रदृष्टिः अस्मद्देशस्य उपरि पतिता अस्ति । दक्षिणापथस्य सार्वभौमत्वं प्राप्तुं तौ प्रयत्नम् आरब्धवन्तौ स्तः ।



चम्पकदेशस्य दक्षिणभागे कुन्ददेशः अस्ति, वामभागे च कालिन्दीदेशः अस्ति इति भवान् जानाति एव खलु ? कुन्ददेशस्य राजा वृषध्वजः असमर्थः वृद्धः सन्तानरहितः च । दौर्भाग्यवशात् तस्य सिंहासनस्य उत्तराधिकारितां प्राप्तुम् अर्हः समर्थः तस्मिन् देशे अन्यः कोऽपि नास्ति । अतः सः दुष्टतानिपुणस्य मरालभूपतेः कपटयुक्तेः बलिः जातः ।

सः मरालभूपतये वचनं दत्तवान् अस्ति यत् अहं रणरङ्गं स्वयम् अनागच्छन् अपि विशालं सैन्यम्, आहारपदार्थादिकं च युद्धार्थं प्रेषयिष्यामि इति । कुन्ददेशस्य वशीकरणम् अल्पप्रयत्नेन एव सेत्स्यति इति जानन् चक्रभूपतिः तस्य वशीकरणविषयं सद्यः परित्यज्य अस्मद्देशस्य उपरि वक्रदृष्टिं पातितवान् अस्ति ।

अस्मद्देशः वशीकरणीयः चेत् कालिन्दीदेशम् अतिक्रम्य एव आगन्तव्यं खलु ? कालिन्दीराजस्य अस्माकं च बान्धव्यम् अस्ति इति सः दुष्टः मरालभूपतिः जानाति एव । एतत् बान्धव्यं तस्य सङ्कल्पस्य अवरोधकम् अस्ति । अतः तस्य निवारणार्थं सः योजनां कृतवान् अस्ति । अन्यच्च एतदपि श्रूयते यत् मरालभूपतेः पुत्रः कालिन्दी-राजकुमार्याः सौन्दर्यातिशयं श्रुत्वा आकृष्टः सन् ताम् एव परिणेतुं सङ्कल्पितवान् अस्ति इति ।....''

एतावत् उक्त्वा पुनरपि कथनं स्थगितवान् श्रीदत्तः । दक्षिणापथे यत् राजकीयपरिवर्तनं जायमानम् अस्ति तत् श्रुत्वा चिन्ताक्रान्तः अभवत् विजयदत्तः ।

पुत्रस्य चिन्तायाः कारणम् अवगच्छन् उक्तवान् श्रीदत्तः - ''वत्स ! एतादृशस्थितिम् अवगत्य एव ज्येष्ठाः उक्तवन्तः सन्ति यत् शासकस्य जीवनं कण्टकावृतपुष्पस्य जीवनम् इव इति'' इति ।

पितुः सान्त्वनवचनं श्रुत्वा अपि किमपि न उक्तवान् विजयदत्तः । राजकीयपरिवर्तनम् एव चिन्तयन् आसीत् तस्य मनः । कालिन्दी-राजस्य पुत्री श्रीलेखा बाल्यात् एव

सुपरिचिता । सुन्दर्याः तस्याः परिणयः यदा ज्येष्ठैः सङ्कल्पितः तदा विजयदत्तः अपि अन्तरङ्गे सन्तुष्टः आसीत् एव । श्रीलेखा-विजयदत्तयोः परस्परानुरागः दर्शन-मेलन-वार्तालापादिभिः वर्धमानः आसीत् ।

'एतादृशस्थितौ कथम् एषा विलक्षणा स्थितिः उद्‌भूता ? कालिन्दीराजः यद्यपि बन्धुः, तथापि सः प्रलोभेन भीत्या वा मरालभूपतेः पक्षम् आश्रितवान् इति श्रूयते । एवं तर्हि श्रीलेखायाः मम च विवाहः किं सम्भवेत् ? स्वार्थसाधनार्थं श्रीलेखां मरालभूपतेः पुत्राय कदाचित् किं न दद्यात् माधवसेनः ? श्रीलेखां प्राप्तुं मया युद्धं करणीयं भवेत् । युद्धे मम जयः अपि भवेत् कदाचित् । किन्तु युद्धसमाप्तिं यावत् श्रीलेखायाः कन्यात्वं सुरक्षितं भवेत् इत्यत्र तु नास्ति विश्वासः । यतः कुतन्त्रनिपुणाः चक्रभूपत्यादयः यत्किमपि कर्तुम् अर्हन्ति । न्यायनीत्यादयः प्रायः तेषां शब्दकोशे एव न सन्ति । अविवेकिता तु तेषाम् अस्ति एव । तेषां दुष्टतायाः सीमा अपि कापि नास्ति । 'यौवनं धनसम्पत्तिः प्रभुत्वम् अविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥' इति प्राचीनैः उक्तम् अस्ति । मरालभूपतिगणे तु एतत् चतुष्टयम् अपि अस्ति एव । एवं स्थिते परिणामविषये किं वा वक्तव्यम् ? अतः अग्रिमेषु दिनेषु यत्किमपि भवितुम् अर्हति इत्यत्र नास्ति सन्देहः । मया इदानीं सम्यक् विचिन्त्य एव पदं स्थापनीयम् । अन्यथा सुमहत् कष्टम् आपतेत्' इत्येवं बहुधा चिन्तयन् मौनेन उपविष्टवान् विजयदत्तः ।

किञ्चित्कालं श्रीदत्त-विजयदत्तयोः मध्ये मौनं प्रसृतम् आसीत् । मौनपरिसरं भञ्जयन् विजयदत्तः परिस्थितेः अग्रिमविवरणं ज्ञातुम् इच्छन् गम्भीरस्वरेण उक्तवान् - ''तात ! ततस्ततः'' इति ।

*- (अनुवर्तते)*



१८५७ तमवर्षीया वीरगाथा

# प्रथमस्वातन्त्र्यसङ्ग्रामः



*(समग्रे देशे कोणे कोणे समग्रायाः क्रान्तेः अग्निः ज्वलन् आसीत् । झँन्सीराज्ञी-लक्ष्मीबायी, नानासाहेबः च क्रान्तेः युवनायकौ आस्ताम् । आंग्लसर्वकारः महाराजस्य मरणानन्तरं विना कारणं झँन्सीराज्यं स्वायत्तीकर्तुं प्रयत्नम् अकरोत् । किन्तु महाराज्ञी तथा कर्तुम् अवकाशं न दत्तवती । युद्धं प्रवृत्तम् । राज्ञी ब्रिटिश्सेनां धैर्येण सम्मुखीकृतवती । किन्तु यदा दुर्गस्य रक्षणम् असाध्यम् इति ज्ञातं तदा सा दत्तकपुत्रं स्वपृष्ठे वस्त्रेण बद्ध्वा, पुरुषवेषं धृत्वा अश्वम् आरुह्य रहस्यरूपेण दुर्गस्य मुख्यद्वारात् बहिः निर्गतवती । तदनन्तरम् ......)*

महाराज्ञ्या सह नन्दनः, काशी चेति उभौ विश्वासपात्रभूतौ परिचारकौ आस्ताम् । ताभ्यां सह सा अग्रे गच्छन्ती आसीत् । पृष्ठतः शत्रूणां सेनायाः कश्चन भागः तस्याः अनुसरणम् अकरोत् । पुनः पुनः तया तैः सह युद्धं कुर्वत्या अग्रे गन्तव्यम् आसीत् । सर्वे अपि निरन्तरम् आदिनं विश्रान्तिं विना प्रयाणं कृत्वा सूर्योदयात् पूर्वं कालपीग्रामं प्राप्तवन्तः । कालपीग्रामे नानासाहेबस्य सहोदरः देशभक्तः श्री रावसाहेबः वासं करोति स्म । तस्य गृहस्य पुरतः रक्षकाः खड्गं गृहीत्वा रक्षणकार्ये निरताः आसन् ।

''महाराज्ञी ! अत्रभवती झाँन्सीराज्यस्य महाराज्ञी !'' इति आश्चर्येण वदन्तः समीपम् आगत्य नमस्कारं कृतवन्तः रक्षकभटाः ।

रावसाहेबः अपि बहिः आगत्य महाराज्ञ्याः स्वागतं कृतवान् । लक्ष्मीबायी अश्वात् अवतीर्णा । रावसाहेबस्य परिवारस्य महिलाः तस्याः निद्रामग्नं पुत्रं स्वीकृत्य अन्तः गतवत्यः । पुरुषाः तस्याः अश्वम् अश्वशालां प्रति नेतुम् उद्युक्ताः ।

किन्तु अहो ! दुर्विधिः ! कर्तव्यपालनं यत् कृतं तदर्थं महतीं तृप्तिम् अनुभवन् अश्वः श्रान्तिकारणतः अधः पतितवान् । अनुक्षणं तस्य प्राणाः निर्गताः ।



एकत्रीकृतवन्तः । तात्याटोपेनेतृत्वे सा सेना आगच्छन्तीम् आंग्लसेनां सम्मुखीकर्तुं प्रस्थिता । कुन्दनामकस्य ग्रामस्य समीपे उभयोः अपि सेनयोः मेलनं जातम् ।

ततः घोरं युद्धं प्रवृत्तम् । सैन्यव्यवस्थां सम्यक् कर्तुम् अनुशासनं बोधयितुं वा तात्याटोपेवर्यस्य पर्याप्तसमयः न आसीत् । अतः अल्पे एव काले तस्य सैन्येन प्रतिगन्तव्यम् अभवत् । आंग्लसेना कालपीं प्राविशत्, नगरं च सम्यक् अलुण्ठयत् च । दुर्गस्य अन्तः भुषुण्डिकाभिः स्फोटकचूर्णैः च युक्तं शस्त्रागारं आंग्लानाम् अधीनम् अभवत् । तेन शत्रूणां शक्तिः प्रवृद्धा ।

आंग्लसैनिकैः एतदर्थं विजयोत्सवः आचरितः । तथापि लक्ष्मीबायीं, रावसाहेबं, तात्याटोपेवर्यं वा बन्धुम् असमर्थनां तेषां महती निराशा अपि आसीत् । ते त्रयः वीराः सेनां पुनः मेलयित्वा ग्वालियरं प्राप्तवन्तः । ग्वालियरराजः सिन्धियः आंग्लेयानां समर्थकः आसीत् । तद्देशीयाः सामान्याः जनाः तु क्रान्तिकारिणां पक्षं समर्थयन्तः आदरं प्रकटयन्ति स्म ।

यदा क्रान्तिकारिणः ग्वालियरं प्राप्तवन्तः तदा राजा सिन्धियः राजधानीं परित्यज्य पलायितवान् । राज्ञी परिवारजनाः च तान् आदरेण स्वागतीकृतवन्तः । ह्यूगरोजः एतत् स्वस्य अपमानाय अमन्यत । सः जानाति स्म यत् सिन्धियः ग्वालियर्स्वाम्यं यदि न प्रतिप्राप्नुयात् तर्हि ईष्ट्-इण्डिया-संस्थायाः रक्षकसामर्थ्ये अन्यराजाः अविश्वासवन्तः भवन्ति इति ।

अधः पतितम् अश्वं दृष्ट्वा राज्ञी झटिति तस्य समीपम् आगत्य कण्ठेन तम् आलिङ्ग्य सान्त्वयितुम् उद्युक्ता । किन्तु मृतः अश्वः कथं वा उज्जीवितः भवेत् ? राज्ञ्याः नेत्राभ्याम् अश्रुबिन्दवः पतिताः ।

अश्रूणि मोचयितुं विश्रान्त्यर्थं वा नास्ति राज्ञ्याः समयः । उषःकाले सा रावसाहेबेन सह उपविश्य अग्रिम-रणनीतिं चर्चितवती । राज्ञ्याः गुप्तचराः आगत्य सूचितवन्तः - 'झान्सीपत्तने आंग्लेयाः आदिनं लुण्ठनं मारणं च स्वेच्छया कृतवन्तः । आंग्लसेनायाः सूत्रधारः सर्ह्यूग्रोजः महासेनया सह इतः एव आगच्छन् अस्ति' इति ।

राज्ञी, रावसाहेबः, क्रान्तिनायकः तात्याटोपे च द्वित्राणां सामन्तराजानां सेनाम्

झान्सीराज्यम् इदानीम् आंग्लानाम् अधीनम् आसीत् एव । अतः तत्र सेनायाः पूर्ण-भागस्य स्थापनस्य आवश्यकता न आसीत् । अतः ह्यूगरोजः झान्सीतः सैनिकान् आनाय्य महतीं सेनां सज्जीकृत्य ग्वालियरं लक्ष्यीकृत्य प्रस्थितवान् ।



एतत् प्रयाणं तस्य सौभाग्याय एव जातम् । ग्वालियर्वासिनः क्रान्तिकारिणां विषये सहानुभूतिमन्तः आसन् । ते इच्छान्ति स्म यत् आंग्लेयाः भारतं परित्यज्य गच्छेयुः इति । राजविषये अपि तेषां महती श्रद्धा आसीत् एव । राज्ञः मित्रपक्षेण आंग्लेय-सैन्येन सह युद्धं नाम राजविरोधः इति ते भावितवन्तः । अतः एतदवसरे ते तटस्थ-नीतिम् आश्रितवन्तः । ग्वालियर्सैन्येन युद्धे सहभागः न स्वीकृतः ।

राज्ञी लक्ष्मीबायी धैर्येण एव सेनायाः अग्रभागे स्थित्वा युद्धं करोति स्म । विश्वासपात्रीभूतः तस्याः अश्वः दौर्भाग्य-वशात् दिवङ्गतः आसीत् खलु ? यं नूतनाश्वं सा आरूढवती आसीत् स च युद्धकलायाम् अनिपुणः युद्धगत्यादीनाम् अनभिज्ञः च ।

ह्यूगरोजः कश्चन समर्थः अनुभवी सेना-पतिः । एतस्य नायकत्वे दलपतयः बहुषु युद्धेषु भागं गृहीतवन्तः आसन् ।

लक्ष्मीबायीपक्षस्य सैनिकाः समर्पित-चित्ताः इति तु सत्यम् एव, किन्तु तेषु बहवः न प्रशिक्षिताः । अतः युद्धनिपुणानाम् आंग्लसैनिकानाम् आक्रमणस्य सम्मुखी-करणे ते असमर्थाः जाताः । यदि ग्वालियर्सैन्यं साहाय्यम् अकरिष्यत् तर्हि परिणामः अन्यः एव अभविष्यत् प्रायः ।

अपराह्णानन्तरं राज्ञी सेनाधिकारिणः उद्दिश्य - ''प्रतिगच्छाम वयम् । पराजये निश्चिते वृथा प्राणत्यागः अविवेकस्य लक्षणम् । यदि प्राणाः रक्षिताः स्युः तर्हि वयं पुनरपि सङ्घटिताः सन्तः शक्तिं सम्पादयितुं शक्नुयाम'' इति उक्तवती ।

अनन्तरं सा नन्दनेन, काशिना, अन्यैः कैश्चित् सैनिकैः च सह ततः प्रस्थितवती । सर्वे शत्रुसैनिकाः जानन्ति स्म यत् जीवन्ती मृता वा राज्ञी गृहीता चेत् महान् पुरस्कारः प्राप्स्यते इति ।

वेगेन गच्छन्ती राज्ञी एकं चतुष्पथं प्राप्य कस्मिंश्चित् लघुमार्गे अग्रे गतवती ।



अनुसृत्य आगतैः सैनिकैः न ज्ञातं यत् राज्ञी अग्रे कुत्र गता इति । अतः ते चतुरः गणान् रचयित्वा अन्वेषणम् आरब्धवन्तः ।

राज्ञी किञ्चिद्दूरं विना विघ्नम् अग्रे गतवती । एतावता सैनिकानां केनचित् गणेन तेषां गमनम् अभिज्ञातम् । अतः सः एतेषाम् अनुसरणम् अकरोत् । अग्रे एका नदी आगता । पूर्वतनः अश्वः एव यदि स्यात् तर्हि राज्ञी लीलया नदीम् अतिक्रम्य अग्रे अगमिष्यत् । किन्तु अयं नूतनः अश्वः न तादृशः प्रशिक्षितः । सः भीत्या स्थितवान् । पुनः तीरम् अनुसृत्य अग्रे अगच्छत् च ।

एतावता शत्रुसैनिकाः राज्ञीसमीपम् आगताः एव । उभयपक्षीयसैनिकानां मध्ये युद्धम् आरब्धम् । राज्ञी नदीतीरम् अनुसृत्य गच्छन्ती तादृशम् एकं स्थलं प्राप्तवती, यत्र नदीक्रमणं सुलभसाध्यम् आसीत् । किन्तु तावता तया नन्दनस्य चीत्कारः श्रुतः । सा वेगेन प्रतिगत्य खड्गेन आक्रमणकारिणं यमसदनं प्रेषितवती । व्रणितस्य नन्दनस्य साहाय्यार्थं प्रवृत्ता च । तावता कश्चन शत्रुसैनिकः राज्ञीं खड्गेन शिरसिं प्रहृतवान् । राज्ञी अधः पतिता । तावता अङ्गरक्षकाः तं दुष्टम् एकेन एव प्रहारेण गतप्राणं कृतवन्तः । रक्तसिक्तां राज्ञी समीपस्थं कुटीरं प्रति नीतवन्तः च ।

राज्ञी मन्दस्वरेण उक्तवती – ''प्रियवीराः ! प्राणनिर्गमनसमनन्तरम् एव मम अन्त्यसंस्कारः निर्वर्तनीयः । शत्रवः आगच्छन्तः सन्ति । ते मम शरीरं सर्वथा न स्पृशेयुः'' इति ।

अनन्तरक्षणे तस्याः शरीरं प्राणैः वियुक्तं जातम् । अश्रुतर्पणं दत्त्वा तस्याः अनुचराः काष्ठपर्णादीनि एकत्रीकृत्य तस्याः अन्तिमसंस्कारं निर्वर्तितवन्तः ।

एवं भारतीयेतिहासस्य प्रकाशमानम् एकं नक्षत्रम् अस्तम् अगच्छत् । इतिहासे एतादृशी वीरमहिला प्रायः अन्या न

उपलभ्यते । जवहरलालः तस्याः विषये वदति - ''जननां मनस्सु चिरस्थायितया स्थितं नाम एकम् एव - झान्सीराज्ञी लक्ष्मीबायी इति । विंशतिवर्षीया एव सा देशार्थं कार्यं कुर्वती प्राणान् आहुतीकृतवती । शत्रुः आंग्लसेनापतिः अपि तस्याः विषये उक्तवान् आसीत् - 'सर्वोत्तमा अप्रतिमा वीराङ्गना सा' इति ।''

एषा क्रान्तिः अल्पे एव काले परिक्षीणा जाता । यतः क्रान्तिनायकाः शौर्येण युद्धं कुर्वन्तः एकैकशः प्राणान् समर्पितवन्तः, आंग्लैः शूलम् आरोपिताः वा ।

शौर्यम्, साहसं, दूरदर्शिता, नेतृत्वम् इत्यादीनां गुणानाम् अभावः भारते कदापि न आसीत् । अभावस्तु आसीत् - राजसु ऐक्यभावनायाः । अन्यराज्यम् अवरीकर्तुं निरन्तरं यत्नः प्रचलति स्म देशे । शत्रुराज्यं जेतुं विदेशीयशक्तेः अपि साहाय्यस्वीकरणे लज्जा न अनुभूता कैश्चित् राजभिः ।

क्रान्तेः परिसमाप्तेः अनन्तरम् आंग्ल-सैनिकाः भारतीयानां विषये महत् दौर्जन्यम् आचरितवन्तः । लक्षशः निरपराधिनः जनाः तैः निर्दयं मारिताः, सहस्रशः ग्रामाः अग्निसात्कृताः । असंख्यानां महिलानां शीलभङ्गः कृतः । अत्याचारः समाचरितः । दुर्गाणि लुण्ठितानि । .... तैः किं किं न कृतम् ? मोगलराजं बहादुरशाहजाकरं, यश्च क्रान्तिकारिणां पक्षस्य समर्थकः आसीत्, बद्ध्वा रङ्गून्कारागारं प्रति प्रेषितवन्तः ते । वृद्धः सः कष्टानि सहमानः एव कारागारे प्राणान् अत्यजत् ।

अल्पः तृप्तिकरः अंशः नाम ब्रिटिश्-जनाः नेतारः च ईस्ट्-इण्डिया-संस्थायाः जनैः कृतान् अत्याचारान्, दुष्टकृत्यानि, अमानवीय-व्यवहारान् च सम्यक् खण्डितवन्तः । भारते प्रवृत्तस्य दुष्कृत्यस्य विचारणा प्रवृत्ता । राज्ञी विक्टोरिया राज-क्षमां घोषितवती । ततः भारतीयराजानां तात्कालिकाधिकारः अनुमतः अभवत् ।






# धनार्थं धनसाहाय्यम्

कस्मिंश्चित् राज्ये कश्चन महाराजः आसीत् । प्रतिदिनं तस्य प्रासादस्य पुरतः कश्चन संन्यासी स्थित्वा - ''मयि बुद्धिमत्ता अस्ति । परन्तु एतस्य उपयोगः केनापि न स्वीकृतः । स्वयम् अहमपि उपयोगं कर्तुं न समर्थः । किं करणीयम् इति न ज्ञायते'' इति उक्त्वा गच्छति स्म ।

एकस्मिन् दिने महाराजः तं संन्यासिनम् आहूय - ''भोः ! प्रतिदिनं भवान् यानि वाक्यानि वदति तेषां वाक्यानाम् अर्थः कः ?'' इति पृष्टवान् ।

तदा संन्यासी महाराजम् उक्तवान् - ''राजन् ! मयि विश्वस्य भवान् यदि मह्यं धनं दास्यति, तर्हि भवतः कोषं धनराशिना पूरयिष्यामि । मह्यं यावत् धनं दीयते तस्य दशगुणितं लाभं भवान् प्राप्स्यति'' इति ।

संन्यासिनः वचनं श्रुत्वा महाराजः तावत् धनं दत्त्वा तं प्रेषितवान् ।

वर्षानन्तरं सः संन्यासी पुनः आगत्य महाराजम् उक्तवान् - ''महाराज ! मां स्मरति खलु भवान् ? मम योजना अनुवर्तमाना अस्ति । योजनायाः पूर्त्यर्थं पुनः किञ्चित् धनम् आवश्यकम्'' इति ।

मन्त्रिणः विरोधम् उपेक्ष्य पुनः द्वितीयवारम् अपि महाराजः संन्यासिने धनं दत्तवान् ।

पुनः एकं वर्षम् अतीतम् । तृतीयवारं संन्यासी महाराजं द्रष्टुम् आगतवान् । पुनः कार्यविषये वदन् - ''मया क्रियमाणं कार्यम् अन्तिमघट्टे अस्ति । धनम् अपर्याप्तम् अभवत् । अतः पुनः भवन्तं द्रष्टुम् आगतवान् अस्मि'' इति उक्तवान् ।

असमाधानेन स्थितवतः मन्त्रिणः समाधानं कृत्वा पुनः महाराजः संन्यासिने धनं दत्तवान् ।

पुनः वर्षम् अतीतम् । साधुः पुनः

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*

आगतवान् । तदा महाराजः - ''इतोऽपि धनम् आवश्यकं किम् ?'' इति पृष्टवान् ।

तदा संन्यासी उक्तवान् - ''भवतः सहनागुणं दृष्ट्वा महान्तं सन्तोषम् अनुभूतवान् अस्मि । अभिनन्दनीयः अस्ति भवतः सहनागुणः । भवान् मन्त्रिसमेतः मया सह आगच्छतु तावत्'' इति ।

महाराजः झटिति संन्यासिना सह गन्तुम् उद्युक्तः । तत् दृष्ट्वा मन्त्री महाराजम् उद्दिश्य - ''प्रभो ! तिष्ठतु । एषः संन्यासी आवाम् उभौ एव निमन्त्रयन् अस्ति । कुत्र गमनम् ? किमर्थं गमनम् ? अज्ञात्वा गमनम् उचितं न'' इति उक्तवान् ।

मन्त्रिणः वचनं श्रुत्वा महाराजः - ''मन्त्रिवर्य ! अहं तस्मै वचनं दत्तवान् अस्मि । अतः इदानीं विश्वासस्य, वचनस्य च भङ्गः न भवेत् । आपत्कालः आपतति चेत् आत्मानं रक्षितुं समर्थः अस्मि'' इत्युक्त्वा महाराजः संन्यासिना सह प्रस्थितः । मन्त्री तम् अनुसृतवान् ।

संन्यासी ताभ्यां सह अरण्यं, पर्वतान्, नगराणि, नदीः च क्रान्त्वा समुद्रस्य तीरम् आगतवान् । तत्र कश्चन लघुः उडुपः आसीत् । सर्वे तम् आरूढवन्तः। तस्मिन् उडुपे पञ्चजनानां कृते स्थलम् आसीत् ।

किञ्चित्कालानन्तरं सर्वे अपि कञ्चित् द्वीपं प्राप्तवन्तः । सः द्वीपः सम्पूर्णतया भस्मना आवृतः आसीत् । तत्र बहवः बकाः डयन्ते स्म । तस्मिन् भस्मनि कश्चन लघुमार्गः आसीत् । तत्रत्यं वातावरणं दृष्ट्वा मन्त्री - ''एषः कः द्वीपः ? मान्त्रिकानां



वासस्थानम् इव अस्ति एषः । भवान् अस्मान् कुत्र नयन् अस्ति ?'' इति पृच्छन् खड्गं कोषात् आकृष्टवान् ।

तदा सः संन्यासी - ''अलं साहसेन ! एषः कश्चन लघुद्वीपः । अधिकजनाः आगच्छन्ति चेत् भस्म सर्वत्र विकीर्णं भवेत् । बकाः अपि भीताः भवेयुः । अतः रक्षकभटाः न आवश्यकाः इति उक्तवान् अहम्'' इति उक्तवान् ।

किञ्चिद्दूरं गत्वा एकत्र स्थित्वा संन्यासी तत्र विद्यमानं किञ्चित् अयसः द्वारम् उन्नीतवान् । ततः अधः गन्तुं सोपानानि आसन् । 'अधः गत्वा तत्र किम् अस्ति इति दृष्ट्वा आगच्छतु' इति संन्यासी महाराजम् उक्तवान् । महाराजः अधः गतवान् ।

तत्र विद्यमानं मौक्तिकानां राशिं दृष्ट्वा महाराजः महान्तं सन्तोषम् अनुभूतवान् । उपरि आगत्य सः मन्त्रिणम् उद्दिश्य - ''अधः गत्वा आगच्छतु'' इति उक्तवान् । राज्ञः आगमनपर्यन्तम् अपि मन्त्री संन्यासिनं सुदृढं गृहीतवान् आसीत् । राज्ञः सूचनायाः अनुसारं मन्त्री अपि अधः गत्वा मौक्तिकानां राशिं दृष्ट्वा उपरि आगत्य संन्यासिनं क्षमां याचितवान् । तदनन्तरं महाराजः संन्यासिनं तस्य कार्यविषये पृष्टवान् ।

तदा संन्यासी - ''अहं सदानन्दः नाम कश्चन वणिक् । एकदा वाणिज्यं कुर्वन् अहम् एतस्य द्वीपस्य रहस्यं ज्ञातवान् । एतं द्वीपं परितः विशालाः शिलाः सन्ति । तरङ्गाः वेगेन आगत्य शिलाभिः घट्टिताः भवन्ति । तस्मिन् समये तरङ्गैः सह शुक्तयः अपि आगत्य शिलायाः उपरि पतन्ति । शुक्तौ विद्यमानं मांसं खादितुं बकाः अत्र आगच्छन्ति । तासु शुक्तिषु प्रभूततया मौक्तिकानि भवन्ति । तानि मौक्तिकानि सङ्गृहीतुम् अहम् अत्र आगन्तुम् इच्छामि स्म । किन्तु अत्रान्तरे दौर्भाग्यवशात् मम पत्नीपुत्रादयः दिवङ्गताः । तस्मात् कारणात् मम जीवने विरक्तिः जाता । परन्तु एतस्य द्वीपस्य चिन्तनम् अहं त्यक्तुं न शक्तवान् । 'यावत् व्यामोहः भवति तावत् सम्पूर्णं वैराग्यं न लभ्यते' इति अहं ज्ञातवान् । अतः भवतः साहाय्यं स्वीकृतवान् । भवता दत्तेन धनेन प्रथमे वर्षे अहम् अत्र गुहां कारितवान् । एतं द्वीपं सम्पूर्णं भस्ममयं कृतवान् । यदा बकाः शुक्तीः आनयन्ति स्म तदा सर्वाः शुक्तयः अपि भस्मनि विलीनाः भवन्ति स्म । अतः बकाः पुनः शुक्तीः आनेतुं गच्छन्ति स्म । एवं संगृहीताभ्यः शुक्तिभ्यः मौक्तिकानि निष्कास्य अहम् एतस्यां गुहायां पूरितवान् । 'कार्यं कृत्वा दर्शनीयं, नो चेत् मयि भवतः विश्वासः न भवति' इति चिन्तयन् अहम् एतं विषयं रहसि स्थापितवान् आसम् । मया आरब्धं कार्यम् इदानीं समाप्तम् अस्ति । एतानि मौक्तिकानि भवन्तः एव स्वीकुर्वन्तु । अहं निश्चिन्ततया तपः करिष्यामि । भवान्, प्रजाः च सुखेन जीवन्तु'' इति उक्त्वा आशीर्वादं कृत्वा ततः निर्गतवान् ।



# टीपू-राजधानी




*वर्णनम्* - **जयन्ती महालिङ्गम्** *चित्रम्* - **गौतमसेनः**

कृष्णराजसागरतः दक्षिणपूर्वदिशि निर्गता कावेरी प्रायः ३७ कि. मी. दूरे द्विधा विभक्ता भवति । एकं द्वीपं च निर्माति । श्रीरङ्गपत्तननामकः एषः द्वीपः ५ कि. मी. विस्तृतः, २ कि. मी. दीर्घश्च अस्ति । कावेरीनद्या निर्मितेषु त्रिषु द्वीपेषु एषः प्रथमः । अतः एव अत्रत्यं मन्दिरम् 'आदिरङ्ग'नाम्ना निर्दिश्यते ।

मध्ययुगे एषः द्वीपः महत्त्वपूर्णं युद्धस्थानम् आसीत् । अष्टादशे शतके उत्तरार्धे हैदराली-टिप्पुसुल्तानयोः राजधानी आसीत् एषः ।

श्रीरङ्गपत्तनदुर्गं प्रबलम् आसीत् । विजयनगरशासनकाले, तन्नाम १४५४ तमे वर्षे, एतस्य दुर्गस्य निर्माणं जातम् । ५ की. मी. विस्तीर्णे एतस्मिन् द्वीपप्रदेशे २०,००० जनाः वासं कर्तुम् अर्हन्ति । एतस्य दुर्गस्य भित्तौ चत्वारि द्वाराणि सन्ति । तानि च बेङ्गलूरुद्वारम्, मैसूरुद्वारम्, दिल्लीद्वारम्, 'वाटर्गेट्' चेति । चतुर्थस्य नाम आंग्लेयैः एव निश्चितम् इति नामश्रवणात् एव ज्ञायते खलु ? तिसृभिः दुर्गभित्तिभिः, तिसृभिः पीरखाभिः च आवृतम् एतत् दुर्गम् अद्य जीर्णावस्थायाम् अस्ति । तथापि एतत् द्रष्टॄणां चित्तस्य आकर्षणे नितरां समर्थम् अस्ति ।

दुर्गस्य अन्तः स्थितेषु भवनेषु - रङ्गनाथमन्दिरं, टीपूद्वारा निर्मितं प्रार्थनामन्दिरं, टीपूप्रासादः यश्च (अवशेषरूपेण प्राप्यते) बन्दीनां निमित्तं निर्मिताः कारागारप्रकोष्ठाः च प्रमुखाः ।

टीपूराजः कश्चन विलक्षणः पुरुषः । सः स्वातन्त्र्यप्रियः आसीत् । केचन इतिहासकाराः,





*श्रीरङ्गपत्तनदुर्गम्*
*चतुरस्रे - टिप्पूसुल्तानः*



'गुम्बज्'नामकं भवनम्



'रङ्गनतिट्टु'प्रदेशे दृश्यमानाः

बकादयः



पक्षिविशेषाः

विशिष्य आंग्लेयाः, तं धर्मान्धित्वेन अत्याचारित्वेन च चित्रितवन्तः सन्ति । एतत् अतिरञ्जितं चित्रणम् इति वक्तुं शक्यम् । यदा शृङ्गेरीशङ्कराचार्यपीठम् अपायग्रस्तम् आसीत् तदा टीपूराजः सैन्यं प्रेषयित्वा साहाय्यं कृतवान् आसीत् । तत्काले शङ्कराचार्यपीठाधीशाय टीपूराजेन लिखितं पत्रम् अद्यापि उपलभ्यते ।

हैदरः टीपू च हिन्दुमन्दिराणां बहूनां निमित्तम् औदार्येण साहाय्यं कृतवन्तौ दृश्येते । रङ्गनाथमन्दिराय उपायनीकृतं रजतपात्रम् अद्यापि द्रष्टुं शक्यम् । एवं हि श्रूयते यत् युद्धार्थं प्रस्थानतः पूर्वं पिता पुत्रः च रङ्गनाथमन्दिरम् आगत्य नमस्कृत्य गच्छतः स्म इति ।

१७९९ तमे वर्षे चतुर्थवारं प्रवृत्ते आंग्ल-मैसूरु-युद्धे श्रीरङ्ग-पत्तनदुर्गं विनाशितम् अभवत् । एतत् आक्रमणं सोढुं टीपूराजस्य सामर्थ्यम् अपर्याप्तं जातम् । नदीतीरे विद्यमानस्य द्वारस्य (वाटर्गेट्) समीपे शत्रूणां शस्त्रप्रहारतः व्रणितः पतितः च टीपूराजः मन्दगत्या सर्पन् दुर्गस्य अन्तः गन्तुं प्रयतमानः आसीत् । किन्तु मीरसादकः नाम विश्वासद्रोही तस्य गतिम् अवरुद्धवान् । आंग्लसैनिकः कश्चित् गोलकास्त्रप्रयोगेण टीपूराजं मारितवान् । यत्र टीपूराजेन वीरगतिः प्राप्ता तत्र एकम् अमृतशिलानिर्मितं फलकं दृश्यते अद्यापि । एतस्य

आक्रमणस्य नेतृत्वम् ऊढवान् आसीत् लार्डवेल्लस्ली । सः एव अग्रे १८१५तमे वर्षे प्रवृत्ते वाटर्लू-युद्धे जर्मनसेनामुख्यस्य ब्लूखेरवर्यस्य साहाय्येन नेपोलियनं पराजितवान् ।

श्रीरङ्गपत्तने टीपूसुल्तानेन निर्मापितानि त्रीणि स्मारकाणि उल्लेखार्हाणि सन्ति । तानि च प्रार्थनामन्दिरं, दरियादौलत्-उद्यानं, गुम्बज्भवनं च । प्रार्थनामन्दिरं १७८७ तमे वर्षे निर्मितम् । २७५ सोपानैः युक्तस्य एतस्य शिखरभागद्वयम् अस्ति, यत्र च स्थित्वा समग्रः द्वीपः द्रष्टुं शक्यः । 'दरियादौलत्'नामकम् उद्यानं दुर्गात् बहिः अस्ति । अस्य अन्तः टीपूराजेन निर्मितं ग्रीष्मविरामभवनम् अस्ति । एतस्य भवनस्य द्वारेषु टीपूराजस्य विविधानि चित्राणि दृश्यन्ते । अद्य एतत् सङ्ग्रहालयत्वेन सज्जीकृतम् अस्ति ।

गुम्बजभवनं टीपूराजस्य, तस्य मातापितॄणां च स्मारकस्थानम् । नगरस्य दक्षिणपूर्वदिशि कृष्णशिलामयैः स्तम्भैः, हस्तिदन्तशोभित-रचनायुक्तैः द्वारैः च युक्तम् एतत् भवनं मनोहरम् अस्ति । दुर्गस्य उत्तरभागे अस्ति रङ्गनाथमन्दिरम् । एतस्य विविधाः भागाः विभिन्ने काले निर्मिताः । मुख्यमूर्तिः रङ्गनाथस्वामी ४-५ मीटर्दीर्घः अस्ति । रङ्गनाथः अत्र सर्पशायी । अनन्तनागः फणां प्रसार्य विष्णवे छायां कल्पयति । लक्ष्मीः च पादमूले उपविश्य सेवां करोति । अधः गौतमस्य कावेर्याः च मूर्तिः अस्ति । गर्भगृहात् बहिः स्थित्वैव भगवतः दर्शनं प्राप्तुं शक्यम् ।

द्वीपस्य पूर्वभागे दुर्गात् बहिः 'गञ्जाम'नामकम् उपनगरम् अस्ति । पूर्वम्



*रङ्गनाथमन्दिरम्*

एतत् नगरं वलय-वस्त्र-कागदादीनां निर्माणस्थानम् आसीत् । गञ्जामनगरे क्याथोलिक्गणीयं क्रैस्तमन्दिरम् अस्ति । एतत् फ्रान्सदेशीयेन मतबोधकेन 'द्यूबोय'नामकेन निर्मापितम् ।

श्रीरङ्गपत्तनतः ४ कि. मी. दूरे अपरः द्वीपः अस्ति । एतत् एव सुप्रसिद्धं पक्षिधाम - 'रङ्गनतिट्टु' । जूनतः डिसेम्बरमासान्तं यावत् सन्तानोत्पत्त्यर्थं विविधाः पक्षिणः विभिन्नदेशेभ्यः सुदूरात् आगच्छन्ति अत्र । तत्काले आकाशः तेषाम् उड्डयनेन शोभते । १९४० तमे वर्षे एषः प्रदेशः अभयपक्षिधामत्वेन घोषितः अभवत् ।

श्रीरङ्गपत्तनतः कावेरी दक्षिणदिशि प्रवहति । ततः २५ कि. मी. दूरे नद्याः वामतटे सोमनाथपुरग्रामः अस्ति । अत्र होय्सलशैल्या निर्मितम् अपूर्वं भवनम् अस्ति, यच्च बेलूरु-हळेबीडुदेवालयाभ्याम् अपि उत्तमस्थितौ अस्ति । होय्सलराजस्य तृतीयनरसिंहस्य मन्त्री दण्डनायकः सोमनाथः एतत् मन्दिरं १२५८ तमे वर्षे निर्मापितवान् । एतत् अपि केशवमन्दिरम् अन्य-होय्सलशैलीकमन्दिराणि इव वीणाकारेण एव अस्ति । मन्दिरस्य भित्तौ १२४ देवताः चित्रिताः सन्ति । अद्य गर्भगृहं शून्यं दृश्यते । पूर्वम् अत्र केशवमूर्तिः आसीत् ।

बहूनां हिन्दुमन्दिराणां निर्माता कः इति, शिल्पी कः इति वा कोऽपि न जानाति । किन्तु एतस्य मन्दिरस्य विषये न तथा । मन्दिरभित्तिफलके शिल्पिनां हस्ताक्षराणि सन्ति । शिलाफलके कस्मिंश्चित् दातॄणां नामानि अपि अङ्कितानि सन्ति । सोमनाथदण्डनायकः अन्यानि चत्वारि मन्दिराणि अपि निर्मापितवान् इति श्रूयते । तेषु पञ्चलिङ्गेश्वरमन्दिरं, नृसिंह-मन्दिरं च अद्य उपलभ्येते । किन्तु उभयम् अपि शिथिलावस्थाम् आपन्नम् अस्ति । यदि केशवमन्दिरस्य समीकरणं न कार्येत तर्हि एतदपि अचिरात् एव तयोः मन्दिरयोः अवस्थां प्राप्नुयात् ।



*सोमनाथपुरीयं केशवमन्दिरम्*



# सर्पारिसेवितो देवः शरणम्

विदेहराज्ये कोदण्डगिरिग्रामे कोदण्डश्रेष्ठिनामकः कश्चन वणिक् निवसति स्म । सः प्रामाणिकतया वाणिज्यं करोति स्म । अतः जनाः सर्वे तम् आदरेण पश्यन्ति स्म ।

अरुणा तस्य एकमात्रपुत्री । सा सुन्दरी विनयशीला च । 'दूरबन्धोः पुत्राय विनयाय पुत्री दातव्या । जामाता च पुत्रत्वेन गृहे स्थापनीयः' इति कोदण्डश्रेष्ठिनः इच्छा । अतः सः विनयस्य पित्रे विवाहप्रस्ताववार्ता प्रेषितवान् ।

विनयस्य मात्रे एषः प्रस्तावः अरोचत । सा पतिम् उक्तवती - ''एतस्मिन् वर्षे वाणिज्ये अस्माकं महती हानिः जाता अस्ति । वयं महति ऋणगर्ते पतिताः । अतः एव कुन्तलद्वीपं प्रति वाणिज्यार्थं पुत्रं प्रेषयन्तः स्मः । किन्तु कोदण्डश्रेष्ठी प्रायः एतत्सर्वं न जानाति इति मन्ये'' इति ।

''यद्यपि कुन्तलद्वीपस्य राज्ञः अनुज्ञा प्राप्ता अस्ति, विनयः अपि तत्र गमनार्थं सर्वविधसन्नाहं कृतवान् अपि अस्ति, तथापि मम तु भाति यत् कुन्तलदेशं प्रति विनयस्य गमनम् अपाकृत्य कोदण्डश्रेष्ठिनः पुत्र्याः वधूत्वेन स्वीकारः एव वरम् इति । तदा वरदक्षिणारूपेण प्राप्तेन धनेन ऋणं प्रत्यर्पयितुं शक्येत । वाणिज्यात् यत् प्राप्यते तेन सुखजीवनं कर्तुं शक्यम् । दूरदेशं प्रति विनयस्य प्रेषणात् अस्माकं या चिन्ता भवेत् सा अपि न स्यात् । यदि भगवदनुग्रहः स्यात् तर्हि विदेशगमनं विनैव अत्रैव अस्माकं वाणिज्यं प्रगतिम् आप्नुयात् अपि'' इति उक्तवान् विनयस्य पिता ।

एतत्सर्वं शृण्वन् तत्रैव स्थितः विनयः तदा उक्तवान् - ''अम्बः ! आर्थिकक्लेशं मनसि

निधाय ईदृशं चिन्तनं यत् क्रियते, किं तत् उचितम् ? क्लेशाः न खेदाय, किन्तु क्लेशात् भीतिः एव खेदाय । अस्माकं कुटुम्बस्य कष्टस्थितिः अन्यैः न ज्ञायेत इति मम अपेक्षा । तत्रापि वधूपक्षीयाः अस्मद्गृहस्य स्थितिं जानीयुः एव । तदा ते किं चिन्तयेयुः ? 'ऋणप्रत्यर्पणार्थम् एव एषः विवाहः सम्पादितः' इति ते वदेयुः । अस्मान् च अनादारेण पश्येयुः । अनन्तरं मया कदाचित् तेषां गृहे सेवकत्वेन स्थातव्यं भवेत् ।

अहम् अरुणां न इच्छामि इति एतस्य तात्पर्यं न । मम तु कथनस्य अयम् आशयः यत् विवाहात् पूर्वम् अहम् अपि तद्गृहीयतुल्यतां प्राप्नुयाम् इति । कुन्तल-राजतः तु मया अनुज्ञा प्राप्ता अस्ति एव । तत्र अस्मद्देशीयानि वस्तूनि द्विगुणितमूल्येन विक्रीतानि भवन्ति । तत्र सुवर्णस्य अल्प-मूल्यता । वर्षद्वयम् यावत् तत्र स्थित्वा धनं सम्पाद्य अहं सुवर्णं पर्याप्तमात्रेण आनेतुं शक्नोमि । तदा अस्माकं स्थानम् अपि गौरवान्वितं भविष्यति । अतः वर्षद्वयं प्रतीक्षा क्रियताम् इति मम प्रार्थना'' इति ।

पुत्रस्य वचनं श्रुत्वा सन्तुष्टः पिता पत्नीम् उक्तवान् - ''वाणिज्यम् अस्माकं परम्परागता वृत्तिः । विनयः अपि वाणिज्ये निपुणः अस्ति एव । तदनुगुणम् एव सः उक्तवान् अस्ति । दैन्यप्रदर्शनं ममापि प्रियं न'' इति।

अनन्तरं पुत्रम् उद्दिश्य - ''वत्स ! मम एका सूचना । कोदण्डश्रेष्ठिनः पुत्रीं भवान् न परिणयेत् चेदपि कुन्तलद्वीपं प्रति गमनात् पूर्वं कदाचित् वा कोदण्डश्रेष्ठिनः दर्शनप्राप्तिः वरं स्यात्'' इति ।

विनयः कोदण्डश्रेष्ठिनं द्रष्टुं गतवान् । विनयं दृष्ट्वा कोदण्डश्रेष्ठी नितरां सन्तुष्टः । कुन्तलद्वीपं प्रति विनयस्य गमनं ज्ञात्वा सः उक्तवान् -





''वत्स ! समुद्रमार्गेण द्वीपान्तरं गत्वा वाणिज्यकरणं श्रमसाध्यम् अपायबहुलं च कार्यम् । अतः जामातृत्वेन भवन्तं प्राप्तुम् इच्छन् अहम् अनुज्ञादाने कष्टम् अनुभवामि । तथापि उत्साहवन्तं भवन्तं निषेद्धुम् अपि न शक्नोमि । उत्साहवतः भवतः गमनस्य निषेधः पापाय भवेत् । भवच्छ्रेयोभिलाषिणा मया अनुज्ञा दातव्या एव । किन्तु भवन्तम् एव जामातृत्वेन प्राप्तुम् इच्छमि अहम् । अतः एतावत् तु वदामि यत् वर्षद्वयाभ्यन्तरे भवान् प्रत्यागमिष्यति चेत् अरुणा भवते एव दास्यते इति'' इति ।

एतत् श्रुत्वा विनयः चिन्तितवान् - 'विवाहः एव वरम् इति पिता यदा उक्तवान् तदा अहं निराकृतिं प्रदर्शितवान् आसम् । इदानीं कोदण्डश्रेष्ठी अपि तदेव वदन् अस्ति । अरुणायाः विवाहः लाभाय अपि । अतः प्रयाणविचारं परित्यज्य अरुणाम् ऊढ्वा अत्रैव स्थितं चेदपि विशेषहानिः न भवेत् । किन्तु एतादृशविषयेषु अरुणा किम् अभिप्रैति इत्येतदपि मुख्यम् एव । अतः एतद्विषये तस्याः अभिप्रायः प्रष्टव्यः । तदनन्तरं यथोचितं निर्णेतव्यम्' इति ।

विनयः अरुणया मिलितवान् । अरुणायाः सौन्दर्यं स्वभावः च विनयाय अरोचत । सः अरुणां पृष्टवान् - ''भवत्याः दर्शनस्य अनन्तरं कुन्तलद्वीपं प्रति गमनस्य इच्छा क्षीयमाणा अस्ति । भवतीं परिणीय अत्रैव स्थातुम् इच्छा । भवत्याः पिता अपि तथैव अभिप्रैति । भवती किं वा अभिप्रैति एतद्विषये?'' इति ।

तदा अरुणा मन्दहासपूर्वकम् उक्तवती - ''कोदण्डगिरिः वाणिज्यदृष्ट्या लघुग्रामः । वाणिज्यप्रतिभायुतस्य भवतः वाणिज्यार्थं एषः ग्रामः सर्वथा अल्पः । साहसी वणिक् नूतने क्षेत्रे वाणिज्यं विस्तारयेत् । भवान्



समुद्रमार्गेण गत्वा वाणिज्यं कृत्वा प्रभूतं धनं सम्पादयेत् इति मम इच्छा । देशविदेशेषु भवतः नाम प्रसिद्धं भवेत् । भवान् कियत् धनं सम्पादितवान् इत्यत्र मम न आस्था । 'विदेशतः आगतस्य श्रेष्ठवणिजः पत्नी' इति ख्यातिम् अहम् प्राप्तुम् इच्छामि । वर्ष-द्वयाभ्यन्तरे भवान् समर्थः अनुभवी वणिक् सन् यदि प्रत्यागच्छेत् तर्हि मम आनन्दः सीमातीतः स्यात् । तत्र प्राप्तः अनुभवः अत्र धनस्य प्रसिद्धेः च सम्पादने सहायकः स्यात् । कुन्तलदेशस्य राज्ञः अनुज्ञा भवता प्राप्ता अस्ति एव । एषः अवसरः योग्यरीत्या उपयोक्तव्यः भवता । उज्ज्वलोदर्कस्य निमित्तं तात्कालिकतया सुखस्य परित्यागः बुद्धिमत्ताम् एव दर्शयति'' इति ।

एतत् श्रुत्वा विनयः उक्तवान् - ''इदानीं मया ज्ञातं यत् पुरुषस्य साफल्यस्य हेतुरूपेण काचित् महिला भवति इति किमर्थं वदन्ति इति'' इति ।

विनयः अरुणायाः अनुरागपूर्णं शुभाशंसनं प्राप्य मातापित्रोः आशीर्वादं च स्वीकृत्य कुन्तलद्वीपं प्रति प्रयाणं कृतवान् ।

कुन्तलद्वीपे विनयः वाणिज्ये विशेष-साफल्यं प्राप्तवान् । वर्षद्वयाभ्यन्तरे सः पर्याप्तमात्रेण धनं सम्पादितवान् । गृहं प्रति सः तदा तदा धनं प्रेषयति स्म । एतेन गृहस्य ऋणभारः पूर्णतः अपगतः । तदीयः पिता पुनरपि वाणिज्ये प्रवृत्तः जातः । विनयः कुन्तलद्वीपे 'मेधावी वणिक्' इति ख्यातिं प्राप्तवान् ।

अत्रान्तरे काचित् अहितकरी घटना घटिता । केचन कुन्तलराजस्य उपरि आक्रमणं कृतवन्तः । किन्तु सौभाग्यवशात् राजा प्रणापायात् रक्षितः । अनन्तरकाले अन्वीक्षणात् ज्ञातं यत् एतस्य कृत्यस्य हेतुभूताः विदेहदेशे वसन्ति इति । अतः कुन्तलदेशराजः विदेहराजाय सन्देशं प्रेषित-वान् - 'अन्वीक्षणात् ज्ञातम् अस्ति यत् कुतन्त्रकारिणः भवद्देशे रहसि स्थिताः सन्ति इति । भवद्देशं वयं मित्रदेशं भावयामः । मित्रदेशीयराजेन भवता दोषिणः अन्विष्य बद्ध्वा अस्मभ्यं समर्पणीयाः । यदि एतत् न क्रियते तर्हि भावनीयं भवति यत् दोषिणां कृते भवता सोद्देशम् आश्रयः दत्तः अस्ति इति । तदा मैत्र्याः भङ्गः अपि भविष्यति' इति । एतावत् सन्दिश्य सः सूचितवान्

आसीत् यत् यथायोग्यम् अन्वीक्षणं यदि न कार्येत तर्हि वाणिज्यादिनिमित्तम् अस्मद्राज्ये भवद्देशीयाः ये इदानीं वसन्ति ते सर्वे प्राणापहरणदण्डेन दण्ड्यन्ते इति ।

एतं सन्देशं प्राप्य विदेहराजः नितरां दुःखितः । सः गुप्तचरान् आहूय आदिष्टवान् - ''एतस्य दोषारोपणस्य सत्यासत्यता परीक्षणीया भवद्भिः । यदि अपराधी अस्मद्देशे एव कुत्रचित् स्यात् तर्हि सः निग्रहणीयः । सः उच्चपदे स्थितः अपि स्यात् कदाचित् । तथापि निर्दाक्षिण्यं कारागारे सः स्थापनीयः'' इति ।

गुप्तचराः समग्रे देशे स्वकीयं जालं प्रसार्य विशेषावधानेन अन्वेषणम् आरब्धवन्तः । सन्देहास्पदजनेषु तैः विशेषदृष्टिः निहिता । कथमपि कोदण्डश्रेष्ठिनि अपि तेषां परीक्षा-दृष्टिः पतिता ।

कोदण्डश्रेष्ठिनः बन्धोः विवाहावसरे एकः पुरोहितः एकः कविश्च उपस्थितौ । तयोः वासार्थम् एकः प्रकोष्ठः कल्पितः श्रेष्ठिना ।

पुरोहितः प्रकोष्ठस्य भित्तेः आणौ स्वयुतकं स्थापितवान् आसीत् । तस्य स्वीकरणसमये कथमपि तत् छिन्नम् । एतत् दृष्ट्वा कविः उक्तवान् - ''अस्थि नास्ति, शिरो नास्ति, बाहुरस्ति निरङ्गुलिः, नास्ति पादद्वयं यस्य तत् छिन्नं, कष्टम् आगतम् । धरणात् तु तत् सजीवं भविष्यति'' इति वदन् हसितवान् ।

तदा पुरोहितः लघुकोपेन उक्तवान् - ''अलं भवतः कवनेन । सूच्या एतत् समीकरिष्यामि'' इति ।



तदा कवेः दृष्टिः समीपस्थायाः अरुणायाः उपरि पतिता । कविः तां आहूय अवदत् - ''मह्यं ताम् आनीय ददातु या च एकनेत्रा अपि काकी न ! तम् अपि आनयतु, यश्च वर्धते क्षीयते च, किन्तु न चन्द्रः, न वा समुद्रः । एतौ उभौ स्तः चेत् पुरोहितस्य कार्यं सुकरं स्यात्'' इति ।

एतानि वचनानि कोदण्डश्रेष्ठी अपि श्रुतवान् आसीत् । सः असन्तोषेण उक्तवान् - ''कविवर्य ! गूढवचनैः अस्मान् कष्टे मा पातयतु भवान् । इदानीं देशे सर्वत्र गूढचराः अटन्तः सन्ति । यदि ते गूढचराः एतानि विलक्षणवचनानि शृणुयुः तर्हि वयं कष्टे पतेम'' इति ।

कोदण्डश्रेष्ठिनः आतङ्कं दृष्ट्वा कविः हसन्

– ''मया विलक्षणवचनं किमपि न उक्तम् । एकनेत्रा सूची । वर्धते क्षीयते चैव यः, सः तन्तुः । आलङ्कारिकः प्रयोगः कवीनां सहजः । भवतः गृहे वयम् आवासं कृतवन्तः खलु ? अतः तया एव शैल्या आशीर्वादं करोमि 'सर्परिसेवितो देवः तनोतु तव मङ्गलम् ।' भवता अपराधिनाम् अन्वेषणे निरतानां गूढचराणां विषयः उक्तः । अपराधिनः अत्र क्वचित् स्युः इति गूढचराणां भ्रान्तिः । अपराधिनः तु अन्यत्र भवन्ति । तेषाम् अपि सर्परिसेवितः देवः एव शरणम्'' इति उक्तवान् ।

गुप्तचराः श्रेष्ठिनः गृहपरिसरे आसन् एव । तैः चिन्तितम् – 'कविः अपराधिनाम् आश्रय-स्थानं साङ्केतिकतया सूचयन् अस्ति । सर्पाणां शत्रुः गरुडः । तेन सेवितः विष्णुः । अतः गुरुडाचार्यादिनामभिः युक्तेन शिल्पिना निर्मिते विष्णुपर्यायनामके मन्दिरे कुत्रचित् अपराधिनः सन्ति' इति । अतः ते तादृशस्य मन्दिरस्य अन्वेषणे निरताः जाताः ।

एवम् अन्वेषणात् तैः गरुडाचार्यनामकेन शिल्पिना निर्मितं नारसिंहमन्दिरं प्राप्तं, यच्च नितरां जीर्णावस्थाम् आपन्नम् आसीत् । तत्र अपराधिनां वासः अपि तैः अधिगतः । राजा तान् सर्वान् बद्ध्वा कुन्तलद्वीपराजाय अर्पितवान् ।

एतस्य फलतः विनयः अन्ये वणिजः च सकुशलं स्वदेशं प्रत्यगताः । सर्वे तृप्त्या निश्श्वसितवन्तः ।

कोदण्डश्रेष्ठी अरुणा-विनययोः विवाहं सवैभवं निर्वर्तितवान् । आशीर्वाददानार्थं तस्मिन् विवाहदिने राजा अपि उपस्थितः आसीत् । विवाहसमारम्भे एव राजा तं कविम् अपि सत्कृतवान्, यश्च साङ्केतिकतया सम्भाषणं कुर्वन् अपराधिनां वासस्थानं सूचयन् राजानं देशं च अपवादकलङ्कात् रक्षितवान् आसीत् ।

'मम साफल्यस्य कारणम् अरुणा एव' इति सर्वदा वदति स्म विनयः । ख्यातिमन्तं समर्थं वणिजं पतित्वेन प्राप्तवती अरुणा पतिं साभिमानं सेवते स्म ।



# महाभारतम्

'युद्धं विनाशाय एव' इति धृतराष्ट्रः अपि दुर्योधनं बोधितवान् । किन्तु दुर्योधनः कस्यापि वचनं श्रोतुं सिद्धः न आसीत् । अतः सभायां स्थिताः सर्वे राजानः - 'इतः परं युद्धम् अपरिहार्यम्' इति निश्चित्य ततः निर्गतवान् ।

'मत्पुत्राः यदि युद्धे पाण्डवान् जेतुं शक्नुयुः तर्हि युद्धं भवतु नाम' इति चिन्तनम् आसीत् धृतराष्ट्रस्य । अतः सः सञ्जयम् आनाय्य एकान्ते - "सञ्जय ! भवान् पाण्डवानाम् अस्माकं च बलाबलं सम्यक् जानाति । अतः पाण्डवपक्षपातिनः राजानः के सन्ति, तेषु कस्य राज्ञः शक्तिः कियती, के राजानः पाण्डवानां साहाय्यं कुर्युः, के च अस्माकं साहाय्यं कुर्युः, के च युद्धे उदासीनतया तिष्ठेयुः इत्यादिकं सर्वं विस्तरेण वदतु" इति उक्तवान् ।

तदा सञ्जयः - "राजन् ! अहम् एकान्ते भवन्तं किमपि वक्तुं नार्हामि । मया यत् उच्येत तत् श्रुत्वा भवान् असूयां प्राप्नुयात् । अतः गान्धारीं व्यासं च अत्र आनाययतु" इति सूचितवान् ।

धृतराष्ट्रस्य निमन्त्रणस्य अनुसारं व्यासः गान्धारी च तत्र उपस्थितौ । तदा सञ्जयः धृतराष्ट्रम् उद्दिश्य उक्तवान् - "राजन् ! कृष्णार्जुनौ अवतारपुरुषौ महावीरौ च । त्रयः लोकाः सम्भूय अपि कृष्णस्य लेशमात्रहानिम् अपि कर्तुं न अर्हन्ति । भवतः पुत्राः उन्मूलनीयाः इत्यस्ति कृष्णस्य सङ्कल्पः" इति ।

"सञ्जय ! एतत् रहस्यं भवता कथं ज्ञातम् ? मया किमर्थं वा न ज्ञातम् ?" इति





पृष्टवान् धृतराष्ट्रः ।

''राजन्, भवतः विवेकः व्यामोहावृतः अस्ति । तमोगुणेन आवृतम् अस्ति भवतः मनः । मम मतिः तु स्वच्छा निष्कल्मषा च अस्ति । अतः एव कृष्णस्य महत्त्वं मया ज्ञायते, न तु भवता । स्वच्छमनस्काः एव वस्तुतत्त्वं यथास्थितम् अवगन्तुं शक्नुवन्ति, न अन्ये'' इति उक्तवान् सञ्जयः ।

तदा व्यासः अपि - ''महाराज ! पाण्डवानां विषये भवतः व्यवहारं दृष्ट्वा कृष्णः भवते क्रुध्यति । अन्यथा सः भवति विश्वासवान् एव । एषः सञ्जयः कृष्णविषयं सर्वं जानाति । अतः एषः यथा वदति तथा आचरणम् एव भवतः हिताय'' इति सूचितवान् ।

इतःपूर्वं दौत्यं समाप्य सञ्जयः यदा हस्तिनापुरं प्रति आगच्छन् आसीत् तदा धर्मराजः कृष्णम् उद्दिश्य - ''कृष्ण ! मित्राणां साहाय्यं प्राप्तुम् एषः सुसमयः । एतस्मिन् सङ्कटकाले अस्मान् रक्षितुं समर्थः भवान् एकः एव । भवति विश्वस्य एव वयं कौरवाणाम् उन्मूलने मतिं कृतवन्तः स्मः । अस्मद्रक्षणभारः भवति एव निक्षिप्तम् अस्ति'' इति उक्तवान् ।

''धर्मनन्दन ! भवतः मनसि यत् अस्ति तत् स्फुटतया वदतु तावत्'' इति उक्तवान् कृष्णः ।

तत् श्रुत्वा धर्मराजः उक्तवान् - ''सञ्जयेन यद्यत् उक्तं तत्सर्वं श्रुतं खलु भवता ? धृतराष्ट्रस्य आशयं स्फुटीकृतवान् अस्ति सः । वृद्धः धृतराष्ट्रः अस्मभ्यं राज्यं तु दातुं न इच्छति । किन्तु अस्मत्तः शान्ति-व्यवहारान् इच्छति सः । धृतराष्ट्रस्य वचने विश्वस्य वयं घोरं वनवासं कृतवन्तः । तथापि स तु दुर्योधनस्य इच्छानुसारम् एव व्यवहरति । एतस्य परिणामतः अहं मातुः सहोदराणां च विषये न्याय्येन व्यवहर्तुं न शक्तवान् । 'पञ्च ग्रामाः दत्ताः चेदपि वयं युद्धविचारं परित्यजेम' इत्यपि उक्तं मया । किन्तु धृतराष्ट्रेन तावन्मात्रम् अपि न अङ्गी-कृतम् । कृष्ण ! दारिद्र्यात् मरणं वरम् इति वचनं सत्यम् । क्षत्रियधर्मः नितरां कष्टकरः । वयं क्षात्रधर्मं परित्यज्य वृत्त्यन्तरम् आश्रयितुं सर्वथा न अर्हामः । वस्तुतः वयं शान्तिमार्गम् एव इच्छामः । यदि तदनुसारं न शक्यते तर्हि युद्धम्

अपरिहार्यं स्यात् । एतादृशे अवसरे यथोचितं मार्गदर्शनं भवता एव करणीयम्'' इति ।

तदा कृष्णः उक्तवान् - ''राजन् ! मम दृष्ट्या ते कौरवाः, पाण्डवाः भवन्तः च समानाः । उभयपक्षयोः अपि श्रेयः मनसि निधाय एव अहं कौरवाणां समीपं गच्छन् अस्मि । भवताम् अपेक्षायाः अविरोधेन कौरवसभायां यदि शान्तिवार्तालापं सफलतया कर्तुं शक्नुयां तर्हि मया महत् पुण्यं सम्पादितम् इव । विना कारणम् असङ्ख्यानां जनानां मरणं ततः निवारितं भवेत्'' इति ।

''सः अविवेकी दुर्योधनः भवतः वचनं श्रृणुयात् इति न भाति मम । दुर्बलमतिः सः आत्मीयानां वचनेषु आधिक्येन विश्वासं करोति । एतत् जानन्तः केचन कुटिलमतयः मधुरवचनैः तं वशीकुर्वन्तः दुर्नीतिं बोधयन्तः तदीयं मनः कलुषितवन्तः सन्ति । अतः दुर्योधनः तदनुगुणं एव चिन्तयति, योजनां करोति च । तत्पक्षीयाः अन्यराजाः सर्वेऽपि दुर्योधनस्यैव आशयं पुष्टीकुर्वन्ति । तेषां मध्ये भवतः गमनं कदाचित् अपायं जनयेत् । भवतः अल्पः अपि अपायः न सह्यते अस्माभिः'' इति उक्तवान् धर्मराजः ।

तदा कृष्णः उक्तवान् - ''धर्मराज ! दुर्योधनः कीदृशः इति अहं जानामि एव । अहं कः इति तत्पक्षीयाः अपि जानन्ति । अतः ते मां कोपयितुं प्रयत्नं न कुर्युः इति भाति । यदि मम हानिं केनचित् क्रमेण ते



जनयेयुः तर्हि क्षणमात्रेण तेषां विनाशनं अहं कुर्याम् । वयं शान्तिवार्तालापं यदि न कुर्याम तर्हि लोकापवादः श्रोतव्यः भवेत् । अतः मया तत्र अवश्यं गन्तव्यम् एव'' इति ।

''भवन्तम् उपदेष्टुं मम का अर्हता ? सकुशलं गत्वा प्रत्यागच्छतु भवान् । यदर्थं गम्यते तत् कार्यं साधयित्वा अपि आगच्छतु । समयानुगुणं निर्णीय अस्मदाशयं स्फुटीकरोतु । दैवेच्छा यथा अस्ति तथा भवतु'' इति उक्तवान् धर्मराजः ।

''धर्मराजः ! भवता धर्मः अवलम्ब्यते । युद्धम् एव क्षत्रियाणां धर्मः, न कदापि याचनम् । क्षत्रियः पराजयात् मरणात् वा



भीताः न भवन्ति । कौरवाः बहुभ्यः दिनेभ्यः स्वपक्षसमर्थकान् एकत्रीकुर्वन्तः सन्ति । एतादृशाः ते शान्तिप्रस्तावम् अङ्गीकुर्युः इति मम तु न भाति । यावत् भवान् मृदुव्यवहारं प्रदर्शयति तावत् ते सुखेन राज्यम् अनुभवन्तः तिष्ठन्ति । भवद्विषये यत् अनुचितं कृतं तद्विषये किञ्चिदपि पश्चात्तापं न अनुभवन्ति ते । भवान् धृतराष्ट्रविषये, भीष्मविषये च भक्तिभावं प्रदर्शयति यत्, तत् अनुचितम् इति अहं भावयामि । अहं कौरवसभां गत्वा भवदाशयं स्पष्टीकृत्य भवतः धर्मगुणं सर्वान् अवगमयिष्यामि । भवत्पक्षस्य अन्याय्यं किञ्चिदपि यथा न स्यात् तथा व्यवहरिष्यामि । किन्तु परिस्थितिं परिशीलयामि चेत् भासते यत् युद्धम् अपरिहार्यं स्यात् इति । यावत् दुर्योधनः जीवति तावत् प्रायः भवान् स्वराज्यं प्रतिप्राप्तुं न अर्हति । एतत् मनसि निधाय भवान् अग्रिमदिनेषु व्यवहारं करोतु'' इति उक्तवान् कृष्णः ।

तदा भीमः कृष्णम् उक्तवान् - ''कृष्ण ! भवता इदानीं कौरवसभां प्रति यत् गम्यते तत् सर्वथा औचित्यम् आवहति । सर्वे यथा अवगच्छेयुः तथा शान्तिप्रस्तावम् उपस्थाय तेषाम् अङ्गीकारं प्राप्नोतु भवान् । दुर्योधनस्य राक्षसस्वभावः इति तु सर्वैः ज्ञातम् एव । साधुशब्दैः कथितं कदाचित् न अवगच्छेत् सः । तथापि तेन सह शान्त्या एव व्यवहरतु भवान् । शान्तिः यदि कौरवपक्षेण अङ्गीकृता भवेत् तर्हि एव वरं स्यात्'' इति ।

भीमः एवं कदापि शान्तचित्ततया वार्तालापं न कृतवान् आसीत् । अतः 'अग्निः शीतलतां गतः किम् ?' इति चिन्तयन् कृष्णः भीमम् उक्तवान् - ''भीम ! युद्धशब्दश्रवणेन एव भवान् रोमाञ्चितः भवति स्म । एतादृशः भवान् कथम् इदानीं एवं वदन् अस्ति ? धृतराष्ट्रस्य पुत्राणां संहारः यः प्रतिज्ञातः आसीत् सः किं भवता विस्मृतः ? दुर्योधनस्य मारणं भवान् अहोरात्रं चिन्तयन् आसीत् । तदर्थम् एव उन्मत्तः इव व्यवहरति स्म भवान् । इदानीं तु शान्तिः कथमपि उपस्थापनीया इति मां सानुरोधं भवान् वदन् अस्ति । कथम् एतत् ? वस्तुतः भवान् युद्धात् भीतः

स्यात् । अतः एव शान्तिः घोष्यमाणा अस्ति । स्वपराक्रमम् एव विस्मृतवान् अस्ति भवान् । अतः एव सामान्येन इव व्यवह्रियते । एषा भीतिः न युज्यते । क्षत्रियवंशजः भवान् । महत् कार्यं साधनीयम् अस्ति भवता । भवादृशः स्वशक्त्या सम्पादितमेव अनुभवेत्, न तु परैः करुणया दत्तम् । क्षत्रियकुलजातः, तत्रापि महाबलशाली भवान् एव एवं भीरुः इव 'युद्धं मास्तु' इति यदि वदेत् तर्हि का गतिः स्यात् अस्मत्पक्षस्य ? क्षत्रियः सदापि युद्धशब्दं श्रुत्वा आनन्दतुन्दिलः भवति, न कदापि भीतः । किम् एतत् सर्वं विस्मृतवान् भवान् ?'' इति ।



तदा भीमः उग्रेण कोपेन उक्तवान् - ''कृष्ण ! मया केनचित् आशयेन तथा उक्तम् । किन्तु भवता विपरीतार्थः तस्य कल्पितः । युद्धे मम आसक्तिः नास्ति इति कथम् ऊहितं भवता ? एतावत्सु वर्षेषु भवान् माम् एतावत् एव अवगतवान् किम् ? कौरवाणां मारणं कथम् अहं विस्मरेयम् ? दुर्योधनदुश्शासनादीनां संहारः यः प्रतिज्ञातः सः कथं वा विस्मृतः भवेत् ? न अहं निर्वीर्यः । मम बाहू कदापि शक्ति-रहितौ न भवतः । मम पराक्रमः न कदापि क्षीयते । भरतवंशस्य नाशः सर्वथा न भवेत् इति एकेन एव उद्देशेन मया तादृशः शान्ति-प्रस्तावः पुरस्कृतः, न तु भीत्या'' इति ।

एतत् श्रुत्वा कृष्णः मन्दहासं प्रकटयन् - ''भीम ! भवतः दूषणार्थं मया तथा न उक्तम् । भवतः सामर्थ्यम् अहं सम्यक् जानामि एव । कौरवसभायां भवताम् अन्याय्यं यथा न स्यात् तथैव व्यवहरन् शान्तिवार्तालापं करिष्यामि । यदि सः प्रस्तावः विफलः भवति तर्हि युद्धम् अपरिहार्यम् । तदा जयसाधनादिकं भवदधीनम् एव भविष्यति । यतः अहं तु युद्धं न करिष्यामि । भवतः मनः अवगन्तुं मया तथा उक्तम् । कृपया शान्तः भवतु भवान्'' इति उक्तवान् ।

अनन्तरम् अर्जुनः कृष्णम् उद्दिश्य - ''कौरवसभायां यत् वक्तव्यं तत् धर्मराजः सूचितवान् अस्ति । कौरवाः शान्तिं न अङ्गी-कुर्युः इति मम भाति । अतः युद्धम् अनिवार्यम् एव स्यात् । अतः कौरवपाण्डवानां मैत्री यथा तिष्ठेत् तथा भवान् विशेषप्रयत्नं करोतु । तदनन्तरम् अपि युद्धम् एव यदि



शरणं तर्हि किं वा कर्तुं शक्येत ? कौरवसभायां यथोचितं निर्णयं कर्तुं भवतः अस्ति एव पूर्णः अधिकारः । भवान् यत् निर्णयति तत् सहर्षम् अङ्गीकरिष्यामः वयम्'' इति उक्तवान् ।

''अर्जुन ! मम प्रयत्नं तु अहं श्रद्धया एव करिष्यामि । शकुनिकर्णयोः मार्गदर्शनस्य अनुगुणं व्यवहरन् दुर्योधनः भवद्भ्यः राज्यं दद्यात् इति तु मम न भाति । धर्मराजः शान्तिम् एव इच्छति इति यदि अहं वदेयं तर्हि सः दुर्योधनः सन्धिप्रस्तावम् एव निराकुर्यात् । तदा शान्तिः दुर्लभा एव भवेत्'' इति उक्तवान् कृष्णः ।

अनन्तरं नकुलः कृष्णम् उद्दिश्य - ''मम अग्रजाः स्वकीयम् अभिप्रायम् उक्तवन्तः सन्ति । स्वस्य अभिप्रायः अपि भवता उक्तः अस्ति । किन्तु कौरवाणाम् आस्थाने कस्य अभिप्रायस्य पुरस्कारः स्यात् इति तु केनापि न ज्ञायते । अतः परिस्थित्यनुगुणं भवता एव तत्र यथोचितं निर्णेतव्यम्'' इति उक्तवान् ।

सहदेवः कृष्णम् उद्दिश्य - ''धर्मराजः धर्ममार्गानुगुणं स्वाभिप्रायं प्रकाशितवान् । किन्तु भवता तु युद्धपक्षः एव आश्रयणीयः । युद्धम् एव न्याय्यम् इदानीम् । कौरवाः शान्तिपक्षस्य पुरस्कारं कुर्युः चेदपि भवता उपायेन स च पक्षः कथञ्चित् दूरीकरणीयः एव'' इति उक्तवान् ।

सात्यकिः सहदेवस्य अभिप्रायं प्रोत्साहितवान् । पाण्डवपक्षसमर्थकत्वेन आगताः सर्वे वीराः एककण्ठेन सिंहगर्जनं कृतवन्तः ।

ततः द्रौपदी कृष्णम् उद्दिश्य - ''शान्तिम् अपेक्षमाणः धर्मराजः 'पञ्च ग्रामाः वा दातव्याः' इति यदा उक्तवान् तदा अपि दुर्योधनः तं प्रस्तावं न अङ्गीकृतवान् । न्याय्यं राज्यं पाण्डवैः यत् प्राप्तव्यं तत् कथञ्चित् प्राप्तं भवेत् एव । युद्धं कदाचित् अनिवार्यं भवेत् । भवतु नाम । युद्धे पाण्डवाः कौरवान् निश्चयेन जेष्यन्ति । कौरवाणां संहारः भवेत् । मम अपमाननं कृतवान् दुर्योधनः अद्यापि जीवति । शान्तिप्रस्तावसमये भवान् मम एतान् विकीर्णान् केशान् स्मरतु । एतेषु केशेषु गृहीत्वा ते दुष्टाः मां राजसभां प्रति आकृष्य आनीतवन्तः । तस्य दुष्टस्य दुःशासनस्य शिरश्छेदः यावत् मया न दृश्यते तावत् मम तृप्तिः नास्ति । मम अवमानस्य प्रतीकारः कथञ्चित् भवेत् एव'' इति वदन्ती उच्चैः

आक्रोशनं कृतवती । कृष्णः तस्याः सान्त्वनं कृतवान् ।

कृष्णः पाण्डवानां प्रतिनिधित्वेन प्रस्थानं कुर्वन् सात्यकिम् उद्दिश्य – ''सात्यके, शङ्ख-चक्र-गदादीनि आयुधानि अपि रथे स्थापयतु । दुर्योधनः कश्चन दुष्टः । परमदुष्टौ शकुनि-कर्णौ तस्य सहचारिणौ । महता बलशालिना अपि युद्धनीतिनिपुणेन अल्पः अपि शत्रुः न उपेक्षणीयः'' इति उक्तवान् ।

सर्वविधसन्नाहं समाप्य कृष्णः रथम् आरुह्य सात्यकिना सह हस्तिनापुरं प्रति प्रस्थितवान् । पाण्डवाः, चेकितानः, दृष्टकेतुः, द्रुपदः, काशिराजः, धृष्टद्युम्नः, विराटः इत्यादयः अनेके राजानः किञ्चिद्दूरम् अनुसृत्य गत्वा कृष्णस्य शुभप्रयाणम् आशंसितवन्तः ।

प्रस्थानात् पूर्वं धर्मराजः कृष्णम् आलिङ्ग्य – ''कृष्ण ! अस्माकं मातुः कुन्त्याः योगक्षेमम् अवश्यम् विचारयतु । सा अस्मान् वात्सल्येन पालितवती । अस्माकं कोऽपि क्लेशः यथा न भवेत् तथा विशेषजागरूकताम् आश्रितवती सा । अस्मदर्थं तया बहूनि कष्टानि अनुभूतानि । अस्मत्प्रतिनिधित्वेन भवान् तस्याः सान्त्वनं करोतु । धृतराष्ट्रः, द्रोणः, भीष्मः, कृपाचार्यः, बाह्लीकः, सोमदत्तः, अश्वत्थामा इत्यादीन् ज्येष्ठान् मम नमस्कारान् निवेदयतु । अस्मत्प्रतिनिधित्वेन विदुरम् आलिङ्गतु'' इति उक्तवान् ।

अनन्तरं कृष्णस्य प्रयाणम् आरब्धम् । सर्वे किञ्चित्कालं कृष्णस्य गमनं पश्यन्तः स्थितवन्तः । यदा कृष्णः दृष्टिपथात् दूरं गतः तदा सर्वे प्रत्यागताः ।

दारुकेण चाल्यमानः कृष्णस्य रथः वायुवेगेन हस्तिनापुरं प्रति अगच्छत् । रथः कौरवराज्यस्य प्रवेशम् अकरोत् ।

वृकस्थलनामकं स्थलं यदा प्राप्तं तदा कृष्णः 'रात्रिः अत्रैव यापनीया' इति निश्चितवान् । तदनुगुणं सः सहकारिणः सूचितवान् । अल्पे एव काले तत्र शिबिरं व्यवस्थापितम् अभवत् । ग्रामज्येष्ठाः कृष्णं द्रष्टुम् आगतवन्तः । ते कृष्णं स्वगृहं नीत्वा सत्कृतवन्तः । कृष्णः अपि तेषां कृते सत्कार-व्यवस्थां कृतवान् ।

– *(अनुवर्तते)*



# दम्भोद्भवः

सुसमृद्धस्य देशस्य राजा दम्भोद्भवः । सः समर्थः धर्ममार्गानुयायी च । किन्तु तस्मिन् अहङ्कारः महत्त्वाकाङ्क्षिता च अधिकप्रमाणेन आसीत् । तस्य इच्छा आसीत् यत् प्रपञ्चस्थाः सर्वे मां महापुरुषत्वेन सर्वश्रेष्ठ-राजत्वेन च परिगणयेयुः इति । एषा इच्छा दिने दिने वर्धते स्म । सः प्रतिदिनं सिंहासनम् आरुह्य वदति स्म - ''मन्त्रिणः ! सेनापतयः ! प्रतिनिधयः ! मत्तः अपि श्रेष्ठः शक्तिसम्पन्नः महापुरुषः कोऽपि अस्ति किं लोके ? यदि अस्ति तर्हि उच्यताम्'' इति ।

सभायां स्थितेषु कोऽपि राज्ञः अप्रीतिं प्राप्तुं न इच्छति स्म । अतः सर्वे समानकण्ठेन वदन्ति स्म - ''महाप्रभो, नास्ति तादृशः पुरुषः । भवादृशः श्रेष्ठः पुरुषः लोके अन्यः कोऽपि नास्ति'' इति । एतत् श्रुत्वा राजा आनन्दतुन्दिलः भवति स्म ।

अथ कदाचित् कश्चन मुनिः राज्ञः आस्थानम् आगतवान् । राजा तम् अपि तमेव प्रश्नं पृष्टवान् । तदा मुनिः उक्तवान् - ''तादृशः न एकः, अपि तु उभौ स्तः'' इति ।

''कौ तौ ? तौ कुत्र वसतः ?'' इति आश्चर्येण पृष्टवान् राजा ।

''तौ नर-नारायणनामकौ । गन्धमादनपर्वते तयोः वासः । सर्वमानवेषु श्रेष्ठौ तौ एव'' इति उक्त्वा मुनिः ततः निर्गतवान् ।

मुनेः वचनं श्रुतवतः राज्ञः अहङ्कारस्य आघातः जातः। सः क्रोधेन तपन् गन्धमादनपर्वतं प्रति ससैन्यं प्रस्थितवान् । तस्य पर्वतस्य शिखरभागे क्षीणकायौ तपोनिरतौ द्वौ मुनिपुङ्गवौ दृष्टौ तेन ।

तयोः दर्शनतः राजा नितरां निराशः जातः । 'अतिसामान्ययोः एतयोः दर्शनार्थं मया वृथा प्रयासः कृतः' इति चिन्तयन् सः ताभ्यां सह किञ्चित् सम्भाषणं कृत्वा गन्तुम् इच्छन् तौ उच्चस्वरेण सम्बोधितवान् । किन्तु तयोः एकतरेण अपि नेत्रे न उन्मीलिते । तौ शान्ततया ध्यानमग्नौ आस्ताम् । एतत् असहमानः राजा वाग्बाणैः तौ नितराम् अपीडयत् । तथापि तौ अविचलतया स्थितवन्तौ । तदा राजा अवाच्यशब्दैः निन्दनम् आरब्धवान् ।

एतत् श्रुत्वा एकः मुनिः नेत्रे उद्घाटितवान् । पार्श्वे स्थिताम् एकां कुशशलाकाम् उन्नीय चतुर्धा विभज्य राजानम् उद्दिश्य क्षिप्तवान् । अपरक्षणे एव राज्ञः सैनिकाः सर्वे अन्धाः विकृतरूपाः च जाताः ।

राजा दम्भोद्भवः ज्ञातवान् यत् एतयोः आध्यात्मिक-शक्तिः तपश्शक्तिः च सैनिकबलात् अपि गरीयसी इति । तदीयः दर्पः भग्नः । सः कृतस्य अपराधस्य निमित्तं क्षमायाचनं कुर्वन् नरनारायणयोः पादौ गृहीतवान् । तौ मुनिवरौ राजानं क्षान्त्वा सैनिकानां दृष्टिं रूपं च प्रत्यर्पितवन्तौ । नरः तं हितम् उपदिशन् उक्तवान् - ''प्रजासु प्रीतिः भवतु । अहङ्कारत्यागात् एव भवान् वास्तविकः श्रेष्ठः राजा भवितुम् अर्हति'' इति ।

स्वराज्यं प्रत्यागतः दम्भोद्भवः प्रजानां विषये विशेषप्रीतिं प्रदर्शयन् सुखेन शान्त्या च जीवनं यापितवान् ।



आंग्लान् सम्मुखीकृतवन्तः धीराः

८

# राज्ञी चेन्नम्मा

◆ *रचना* - मीरा उग्रा
◆ *चित्रम्* - गौतमसेनः

दक्षिणभारते स्थितं कित्तूरुराज्यं यद्यपि लघु, तथापि सुसमृद्धम् आसीत् ।



तस्य राजा शिवलिङ्गरुद्रसर्जः १८२६ तमे वर्षे दिवंगतः । मरणसमये सः दत्तकपुत्रं चेन्नम्मायाः हस्ते समर्पितवान् ।



धारवाडनिवासी आङ्ग्लराजकीयप्रतिनिधिः थ्याकरेवर्यः दत्तकपुत्रस्य सिंहासनारोहणे असम्मातिं दर्शितवान् ।




अल्पकालानन्तरम् -







उभयपक्षयोः अपि युद्धसन्नाहः प्रवृत्तः । अक्टोबर्-मासस्य २३ तमे दिनाङ्के थ्याकरे ससैन्यम् आगतः ।
दुर्गस्य द्वारम् उद्घाट्यताम् !
अन्तः आगमानार्थम् अवकाशः न दातव्यः इत्येषा चेन्नम्मायाः आज्ञा !


भवन्तः राज्ञीं वदन्तु यत् २० निमेषाभ्यन्तरे द्वारं न उद्घाटितं चेत् गोलकास्त्र-प्रयोगः करिष्यते इति


सर्वे सकुतूहलं राज्ञ्याः उत्तरं प्रतीक्षमाणाः आसन् । २० निमेषाः समाप्तप्रायाः । तावता ।....
आक्रम्यताम्
युध्यताम्


अकस्मात् प्रवृत्तात् आक्रमणात् आंग्लाः दिग्भ्रान्ताः ।
एते दुष्टाः....


हन्त !
आंग्लानां सैन्यं धूलिसात् जातम् । तीव्रं व्रणितवत्सु थ्याकरे अपि अन्यतमः आसीत् ।


चेन्नम्मा जानाति स्म यत् पुनः अपि आक्रमणं भविष्यति एव इति ।
सैन्ये बहवः प्रवेशनीयाः । साहाय्यार्थं कोल्हापुरराजाय सन्देशः प्रेषणीयः ।
सन्देशवाहकान् दूतान् ,कोल्हापुरमार्गे आंग्लाः गृहीतवन्तः ।


किन्तु प्रजाः राज्ञ्याः समर्थने समुत्सुकाः आसन् ।
महाराज्ञि ! तरुणाः वृद्धाः इत्यादयः सर्वे युद्धार्थम् आगच्छन्तः सन्ति ।


एषः रायण्णः, सङ्गोळ्ळि ग्रामस्य ग्रामाधिकारी ।
स्वागतं रायण्णाय । भवदृशाः एव इदानीम् अपेक्षिताः ।


डिसेम्बर्प्रथमे जनरल् मैक्लोयड् २५००० सैनिकैः, भुशुण्डिभिः च सह आगत्य दुर्गम् आक्रान्तवान् ।
दुर्गं सबलम् । सैनिकाः च धीराः । तथापि न चिन्ता । दुर्गस्थः कोऽपि अस्माकं साहाय्यं कुर्यात् ।...


दिनद्वयस्य अनन्तरम् आंग्लेयाः गोलकास्त्र-प्रयोगम् आरब्धवन्तः ।
BOOM!


प्रतिक्रियारूपेण चेन्नम्मायाः सैनिकाः अस्त्रप्रयोगं कर्तुं न शक्तवन्तः ।
विश्वासघातुकः कोऽपि सर्वनाशं कृतवान् अस्ति ।


चतुर्थे दिनाङ्के सायं स्पष्टतया ज्ञातं यत् दुर्ग-रक्षणम् इतःपरम् असाध्यम् इति ।
आंग्लसैनिकाः यदाकदापि आगन्तुम् अर्हन्ति महाराज्ञि! भवती आत्मरक्षणं करोतु ।


किन्तु
स्थीयताम्
राज्ञी चेन्नम्मा शत्रुभिः गृहीता ।




राज्ञी आंग्लेयानां बन्धनात् मुक्तिः प्राप्तुं न शक्तवती। सङ्गोळ्ळि-रायण्णेन नेतृत्वं वोढव्यम् अभवत् । अचिरात् एव रायण्णः आंग्लानां भीतिहेतुकः जातः ।
(समाप्तम्)



# गृध्रनासिका मन्त्रवादिनी

ललिता भारद्वाजस्य एकमात्रपुत्री । आबाल्यात् नरहरौ तस्याः विशेषप्रीतिः आसीत् । भरद्वाजः वाणिज्यार्थं नगरं गतवान् । तत्काले ललिता द्वादशवर्षीया आसीत् । पञ्चवर्षाभ्यन्तरे भरद्वाजः लक्षशः रूप्यकाणि सम्पादितवान् । नगरे श्रेष्ठ-वणिक्त्वेन प्रसिद्धः अभवत् च ।

नरहरिः कस्यचित् कृषिकस्य पुत्रः । ललिता तु सङ्कल्पितवती आसीत् यत् नरहरिः एव परिणेतव्यः इति । कस्मैचित् कृषिकपुत्राय वराय स्वपुत्रीं दातुं न इच्छति स्म भरद्वाजः । सः पुत्रीं बहुधा बोधितवान् । तथापि ललितायाः मनः न परिवृत्तम् ।

अन्ते भरद्वाजः विवाहविषये वार्तालापं कर्तुं नरहरेः ग्रामं गतवान् । निराशया प्रत्यागत्य सः क्रोधेन पुत्रीम् उक्तवान् - ''तं नरहरिं विस्मरतु भवती । सः भवत्याः पतिः भवितुं नार्हति कदापि'' इति । एतत् श्रुत्वा ललिता नितरां खिन्ना जाता ।

तदा ललितायाः माता पृष्टवती - ''किम् कोपवचनेन ? ग्रामे किं प्रवृत्तम् ?'' इति ।

तदा भरद्वाजः उक्तवान् - ''मासद्वयात् पूर्वम् एव नरहरिः ग्रामं त्यक्तवान् अस्ति । इदानीं सः ग्रामस्य पूर्वस्यां दिशि स्थिते अरण्ये सरोवरस्य पार्श्वे कुटीरं निर्माय वसति इति श्रूयते । सः इदानीं न कुटुम्बजनान् पश्यति, न मित्रैः सह सम्भाषणं करोति । सर्वे वदन्ति यत् सः संन्यासी जातः इति । तादृशाय पुत्रीं दातुं कथं वा शक्येत ?'' इति ।

''एवं चेत् तस्मै पुत्रीं दातुं न शक्यते एव सर्वथा'' इति उक्तवती तदीया पत्नी ।

सा पुत्रीं सान्त्वनस्वरेण उक्तवती - ''भवत्याः पिता युक्तम् एव कथयति । नरहरेः मतिविकलता स्यात् । अन्यथा माता-पितरौ विहाय सः अरण्ये किमर्थं वा वसेत् ? अन्यैः सह किमर्थं वा वार्तालापं न करोति ? तं विस्मरतु भवती'' इति ।

मातुः कथनं श्रुत्वा ललिता रोदनम् आरब्धवती । रात्रौ अपि सा रुदती एव आसीत् । 'किमर्थं नरहरिः गृहं त्यक्तवान्



स्यात् ? किं सः वस्तुतः अपि विरक्तः जातः स्यात्, अथवा अनिर्वचनीयं कष्टं किमपि प्राप्य गन्त्यन्तराभावात् एवं कृतवान् स्यात् ? नरहरेः मेलनात् एव वस्तुस्थितिः ज्ञायेत' इति चिन्तयित्वा सा निश्चितवती यत् नरहरिणा मिलित्वा वस्तुस्थितिः ज्ञातव्या इति ।

एवं निश्चित्य सा मातापितरौ गाढनिद्रायां निमग्नौ दृष्ट्वा रात्रौ एव एकाकिनी गृहात् निर्गता । अनन्तरदिने आदिनम् अन्विष्य सायङ्कालसमये सा नरहरेः कुटीरं प्राप्तवती । नरहरिः सरोवरस्य तीरे उपविष्टवान् आसीत् ।

ललितां दृष्ट्वा नरहरिः नितराम् आश्चर्यचकितः । ललिता तस्य पार्श्वे उपविशन्ती पृष्टवती – ''किम् एषः अकाले अरण्यवासः ? किं संन्यासः गृह्यते, उत कस्यचित् विषये अस्ति भवतः कोपः ?'' इति ।

एतेषाम् उत्तरं किमपि अयच्छन् नरहरिः कोपेन अवदत् – ''किमर्थं भवती एकाकिनी अत्र आगता ?'' इति ।

''आवयोः विवाहस्य विषये वार्तालापं कर्तुम्'' इति निस्सङ्कोचम् उक्तवती ललिता ।

''विवाहसम्भावना अस्तं गता । भवती झटिति इतः निर्गच्छतु'' इति कोपेन एव उक्तवान् नरहरिः ।

''न गच्छामि । कारणं ज्ञात्वा एव गमनं चिन्तयामि । गृहं परित्यज्य किमर्थम् अत्र वासः क्रियते इति भवता वक्तव्यम् एव'' इति सानुरोधम् उक्तवती ललिता ।

''कारणं न उच्यते मया सर्वथा । स्वहितं यदि इष्यते तर्हि इतः निर्गच्छतु भवती'' इति रोषेण उक्त्वा वेगेन उत्थाय कुटीरं प्रविश्य द्वारं पिहितवान् नरहरिः ।

अनन्यगतिका ललिता रुदती ततः प्रस्थिता । सूर्यास्तः जातः । अन्धकारः प्रसृतः । अन्धकारमये अरण्ये स्थितिं स्मरन्ती सा उपरि आकाशं दृष्टवती । तत्र कृष्णमेघाः

दृश्यन्ते स्म । अचिरात् एव मेघगर्जनं श्रुतम् । विद्युतः स्फुरिताः । वृष्टिबिन्दूनां पतनम् अपि आरब्धम् । अग्रे गमनम् असाध्यम् एव इति निश्चित्य ललिता दैवेनैव प्रतिनीयमाना इव नरहरेः कुटीरं प्रत्यागतवती । कुटीरं प्राप्य द्वारशब्दः कृतः । काऽपि प्रतिक्रिया न दृष्टा । वातायनद्वारयोः मध्यतः काचित् प्रकाशरेखा दृष्टा । प्रकाशरेखा यतः आगच्छति तस्मिन् द्वारसन्धौ सा दृष्टिं प्रसारितवती । अन्तः कटस्य उपरि एकः गृध्रः दृश्यते स्म ! एतस्मात् नितरां भीता सा कम्पमाना पतिता, विसंज्ञा जाता च ।



प्रातः द्वारम् उद्घाट्य आगतः नरहरिः पतितां विसंज्ञां ललितां दृष्टवान् । दिग्भ्रान्तः सः प्रथमोपचारेण तां सचेतनां कृतवान् । प्रकृतिस्था सा नरहरिं पृष्टवती - ''रात्रौ भवान् कुत्र गतः आसीत् ? कटे कश्चन घोरगृध्रः दृश्यते स्म'' इति ।

एतत् श्रुत्वा नरहरिः दीर्घं निश्श्वस्य उक्तवान् - ''अहो, भवती गृध्ररूपं दृष्टवती एव ! गृध्ररूपरहस्यं भवत्या न ज्ञायेत इति मम अपेक्षा आसीत् । किन्तु कथञ्चित् भवती तत् रूपं दृष्टवती एव । अतः तां कथां विस्तरेण श्रावयामि तावत् -

मासद्वयात् पूर्वम् अहं भवत्या मेलितुम् इच्छन् नगरं प्रति गमनसमये अरण्यमार्गेण गच्छन् आसम् । यावत् अहं न्यग्रोधारण्यं प्राप्तवान् तावता अन्धकारः प्रसृतः । तत्र एकं कुटीरम् आसीत् । तस्य पुरतः काचित् विकृतरूपा महिला उपविष्टवती आसीत् । तस्याः शरीरं कृष्णवर्णीयम् । नासिका गृध्रनासिकासदृशी । केशाः ताम्रवर्णीयाः । कम्बलसदृशं वस्त्रं धृतवती सा केशप्रसाधनं कुर्वती आसीत् ।

मां दृष्ट्वा सा उक्तवती - ''अहो चिरकाला-नन्तरं युवकस्य दर्शनम् ! भोः ! सुन्दराङ्ग ! कुत्र गमनं भवतः ?'' इति ।

अहं भीतिमिश्रितस्वरेण उक्तवान् - ''अहं मम भाविपत्न्या मेलितुं गच्छन् अस्मि ।''

''एवम् ! भाविपत्न्याः दर्शनार्थं नगरं प्रति गमनं किमर्थम् ? अहम् अस्मि तरुणी । माम् एव परिणयतु । तेन पत्नी अत्रैव प्राप्ता भविष्यति'' इति हसन्ती उक्तवती सा कुरूपिणी ।

''मां सुन्दराङ्गम् उक्तवती अस्ति भवती एव । स्वमुखं कदापि दर्पणे दृष्टं वा भवत्या ?



गृध्रनासिका कज्जलराशिः भवती !'' - मम मुखात् अप्रयत्नेन एते शब्दाः निर्गताः ।

एतत् श्रुत्वा सा नितरां क्रुद्धा जाता । ''मां गृध्रनासिकां वदन् भवान् मम अपमाननं खलु कृतवान् ! अतः रात्रौ प्रतिदिनं गृध्रः भवतु भवान् । दिने मानवः सन् विविधयातनाः अनुभवतु नाम'' इति उक्त्वा सा कांश्चन मन्त्रान् उच्चारितवती ।

तदा मया ज्ञातं यत् एषा काचित् मन्त्रवादिनी अस्ति, माम् उद्दिश्य मन्त्रप्रयोगं कृतवती अस्ति इति । तथापि अहं ताम् उपेक्ष्य अग्रे गतः । किन्तु यदा रात्रिः आगता तदा मम शरीरे तापः उत्पन्नः । अहं गृध्ररूपं प्राप्तवान् । वृक्षस्य कस्यचित् उपरि उपविश्य मया रात्रिः यापिता । प्रातः मानवरूपं प्राप्तवान् अहं मन्त्रवादिनी-समीपं गत्वा पश्चात्तापं प्रकटयन् क्षमां प्रार्थितवान् । शापात् मुक्तिः चापि प्रार्थिता मया । तथापि तया निराकरणं प्रदर्शितम् । सर्वं मम ललाट-लिखितम् । मम रहस्यं कोऽपि न जानीयात् इति मम अपेक्षा आसीत् । अतः अहम् एवम् एकान्ते वसन् कथञ्चित् कष्टं सहमानः अस्मि'' इति ।

सर्वं श्रुत्वा ललिता - 'नरहरिं कथञ्चित् शापमुक्तं करिष्यामि । अथवा प्राणान् वा पणीकरिष्यामि' इति निश्चित्य मन्त्रवादिनीम् अन्विष्य ततः निर्गतवती ।

यदा सा मन्त्रवादिनीगृहं प्राप्तवती तदा सायङ्कालः जातः आसीत् । मन्त्रवादिनी मञ्चस्य उपरि उपविश्य चणकान् खादन्ती आसीत् । ललिता औरसभगिनी इव व्यवहरन्ती तस्याः पार्श्वे उपविश्य - ''किं भगिनि ! किम् एतत् ? भोजनसमये चणक-खादनेन किम् ? एतादृशप्रवृत्तितः एव एवं कृशा जाता अस्ति भवती'' इति उक्तवती ।

''अविद्यमानं सम्बन्धं कल्पयन्ती प्राचीन-बन्धुः इव एवं मत्पार्श्वे उपविष्टवती भवती का ?'' इति कोपेन पृष्टवती मन्त्रवादिनी ।

'मां भगिनीं भावयतु भवती । मम आवुत्तः क्व गतः ?'' इति मन्त्रवादिन्याः कण्ठे मालाकारेण हस्तौ स्थापयन्ती पृष्टवती ललिता ।

''विवाहभाग्यं मम जीवने क्व ? अहम् आजीवनम् एवम् एव कन्यका एव'' इति सविषादम् उक्तवती मन्त्रवादिनी ।

''किमर्थम् एवं निर्वेदः ? विवाहः किं

भवत्याः जीवने गगनकुसुमायते ? यः युवकः भवत्यै रोचते तस्य मनः मन्त्रशक्त्या परिवर्तयितुम् अर्हेत् एव खलु भवती ?'' इति हसन्ती उक्तवती ललिता ।

''हन्त ! तदेव असाध्यं जातम् अस्ति ! हिमालयतः आगतात् कस्माच्चित् मान्त्रिकात् मया परपीडनार्थं मन्त्रः ज्ञातः । किन्तु देवमन्त्रं, मनःपरिवर्तकमन्त्रम्, इङ्गितज्ञानमन्त्रं वा अहं प्राप्तुं न शक्तवती । यतः तावता सः जलप्रवाहे अदृश्यतां गतः आसीत्'' इति सखेदम् उक्तवती मन्त्रवादिनी ।

अत्रान्तरे समीपस्थात् गुल्मात् एकः सकण्टकवराहः आगतः । एकं मन्त्रम् उच्चार्य पाषाणं क्षिप्त्वा मन्त्रवादिनी तं गोधिकां कृतवती ।



''अपूर्वम् एतत् । अहो अपूर्वम् !'' इति करताडनपूर्वकम् उक्त्वा ललिता - ''भगिनि ! किं भवती एतां पूर्वरूपं प्रापयेत् ?'' इति पृष्टवती ।

''न शक्यते । प्रतिशमनमन्त्रम् अहं न जानामि । मन्त्रबलात् जन्तूनां नीचतरं जन्म प्रापयितुम् अहम् अर्हामि, न तु पूर्वतनं रूपं प्रापयितुम् । किन्तु आत्मानं तु यथेच्छं रूपं प्रापयितुं, पूर्वरूपं प्राप्तुं च शक्नोमि'' इति उक्तवती मन्त्रवादिनी ।

ललिता पृष्टवती - ''इतःपरम् एतस्य जन्तोः गोधिकारूपम् एव शरणम्, उत मरणानन्तरं वा पूर्वजन्मजातिप्राप्तिः सम्भवेत् ?'' इति ।

''एतस्य एतत् एव जन्म शरणं, यावत् अहं जीवामि । मम मरणानन्तरम् एतेन पूर्वजन्म प्राप्येत । मन्त्रवादिनः मरणस्य अनन्तरं तदीयमन्त्राणां शक्तयः क्षीणाः भवन्ति'' इति उक्तवती मन्त्रवादिनी ।

क्षणकालानन्तरं ललिता उक्तवती - ''भगिनि ! किं कृत्रिमबान्धव्येन ? भवती मम भ्रातृजाया भवतु । मम अग्रजः भवतीं परिणेष्यति'' इति ।

''किम् एतत् सत्यम् ? अद्यावधि मां कुरूपिणीं ज्ञात्वा सर्वे तरुणाः तिरस्कृतवन्तः । भवत्याः अग्रजः वस्तुतः अपि किं मां परिणयेत् ?'' इति आतङ्केन पृष्टवती मन्त्रवादिनी ।

''असत्यं किमर्थं वदेयम् ? सौभाग्यम् उदितं भावयतु भवती । कश्चित् मुनिः मम अग्रजाय शापं दत्तवान् आसीत् यत् सुन्दरी

काऽपि परिणीता चेत् भवतः शिरः शतधा भग्नं भविष्यति इति । अतः एव मम अग्रजः अद्यापि अविवाहितः तिष्ठति । योग्यवध्वाः अन्वेषणं वयं कुर्वन्तः आस्म । सौभाग्यात् अद्य भवती लब्धा ! अतः एव दर्शनमात्रेण मया भवत्यां बन्धुभावः प्राप्तः'' इति उक्तवती ललिता ।

सन्तुष्टा मन्त्रवादिनी - ''अहो, कुरूपम् अपि सौभाग्याय एव जातम् । शुभस्य शीघ्रम् । इदानीमेव भवत्याः अग्रजस्य समीपं गच्छाव'' इति उक्त्वा गन्तुं सिद्धा जाता ।

''अलं त्वरया । मम अग्रजः भवत्यै रोचेत वा न वा इत्यपि चिन्तनीयं खलु ? अतः आदौ भवत्या सः द्रष्टव्यः । यदि सः सम्मतः स्यात् तर्हि विवाहः चिन्तयितुं शक्यः'' इति उक्तवती ललिता ।

''तदपि युक्तम् एव । अहं शुकरूपेण भवत्या सह आगच्छामि । यदि भवत्याः अग्रजः सम्मतः भवति तर्हि तत्रैव निजरूपं प्राप्स्यामि'' इति उक्त्वा मन्त्रवादिनी शुकरूपं प्राप्य ललितायाः स्कन्धे उपविष्टवती ।

ललिता झटिति कण्ठविमर्दनेन तां मारयित्वा तदीयौ पक्षौ उन्मूल्य क्षिप्तवती । अनन्तरं शुकशवम् उन्नीय नरहरिकुटीरं प्रति प्रस्थितवती ।

कुटीरप्राप्तिसमये रात्रिः जाता आसीत् । नरहरिः गृध्ररूपेण तत्र आसीत् । ललिता शुकशवं गृध्रसमीपे क्षिप्त्वा - ''सा गृध्रनासिका मन्त्रवादिनी मृता अस्ति । मया सा उपायेन मारिता । इदानीं भवान् मन्त्रबन्धतः मुक्तः अस्ति'' इति उक्तवती ।

शापात् मुक्तिं प्राप्य मानवरूपं लब्ध्वा सन्तुष्टः नरहरिः ललिताम् उक्तवान् - ''भवत्या मह्यं पुनर्जन्म प्रदत्तम् । एतदर्थम् अधमर्णः अहं न जाने, कदा ऋणात् मुक्तः भवेयम् इति'' इति ।

तदा ललिता मन्दहासपूर्वकम् उक्तवती - ''परस्परम् ऋणबन्धः ययोः भवति तौ एव पतिपत्नी भवतः इति भवान् किं न जानाति ?'' इति ।



# विकत्थनम् !

एकदा वाणिज्योद्देशेन त्रयः ग्रामतः नगरं गतवन्तः । तेषु एकः गोपालकः, अपरः रक्षकभटः, तृतीयः उद्यानपालकः । रात्रौ ते वासार्थम् एकां धर्मशालाम् आश्रितवन्तः । ते जल्पने मग्नाः अभवन् । गोपालकः उक्तवान् - ''यदि अहं दृप्तवृषभः इव घूङ्करोमि तर्हि समीपस्थेषु शाद्वलेषु स्थिताः सर्वाः धेनवः पलायनं कुर्वन्ति'' इति ।

तदा रक्षकभटः उक्तवान् - ''अहं यदि उच्चैः ध्वनिं करोमि तर्हि चोराः सर्वे भीत्या पलायन्ते । ग्रामं प्रविशन् व्याघ्रः अपि तं ध्वनिं श्रुत्वा पलायते'' इति ।

तत् श्रुत्वा उद्यानपालकः उक्तवान्– ''भवन्तः लघु-विषयान् अधिकृत्य विकत्थनं कुर्वन्ति । अहं न तथा । एषा वस्तुस्थितिः यत् अहं यदा कुक्कुटः इव रवं करोमि तदा एव सूर्यः उदेति'' इति ।

तस्यां धर्मशालायां अन्यः कश्चित् पूर्वम् एव आगत्य वासं कृतवान् आसीत् । सः निद्राम् अभिनयन् एतेषां जल्पनं शृण्वन् आसीत् । 'एतेषां विकत्थनं स्थगनीयम्' इति निश्चित्य सः उच्चस्वरेण व्याघ्रः इव गर्जितवान् । तत् श्रुत्वा ते विकत्थनपराः त्रयः अपि भीत्या धर्मशालां परित्यज्य पलायितवन्तः ।








## गतशतके स्वातन्त्र्यं प्राप्तवान् अन्तिमः भूखण्डः

कः भूखण्डः सङ्घर्षं कमपि अकृत्वा स्वातन्त्र्यं प्राप्नोत् ? कस्मिन् भूखण्डे एषा मौनक्रान्तिः प्रवृत्ता ? कुत्र वा विना विरोधं पारम्परिकनायकत्वं परिवृत्तम् ?

एतत्सर्वं प्रवृत्तं म्याक्यूभूखण्डे । एषः भूखण्डः वस्तुतः चीनादेशीयः आसीत् । किन्तु ४४२ वर्षेभ्यः पूर्वम् एषः भूखण्डः पोर्चुगीस्जनैः स्वायत्तीकृतः । एशियाखण्डयुरोपखण्डयोः परस्परवाणिज्यव्यवहारे प्रमुखं केन्द्रम् - एषः भूखण्डः । चीनादेशस्य वाणिज्यस्य भूयान् भागः एतद्भूखण्डद्वारा एव प्रचलति । युरोपदेशान् प्रति चीनादेशीयानि वस्तूनि एतं भूखण्डं द्वारीकृत्य एव गच्छन्ति ।

भारते गोवाप्रदेशः अपि पोर्चुगीस्जनानाम् अधीनः आसीत् । बलप्रयोगपुरस्सरं तस्य प्रदेशस्य स्वातन्त्र्यं कल्पितं भारतेन । किन्तु म्याक्यूभूखण्डस्य स्वातन्त्र्यकल्पनावसरे कालप्रभाववैलक्षण्यं पश्यन्तु भवन्तः । पोर्चुगल्जनाः एतं भूखण्डं चीनादेशाय दातुं समुत्सुकाः । किन्तु चीनादेशः एतस्य स्वीकारे न तथा त्वरते !

म्याक्यूभूखण्डस्य जनसङ्ख्या प्रायः ४,३६००० । विंशतितमे शतके स्वातन्त्र्यं प्राप्तवत्सु अन्तिमः भूखण्डः अयम् एव । डिसेम्बर्-मासस्य १९ दिनाङ्के मध्यरात्रे एषा स्वातन्त्र्य-प्राप्ति-प्रक्रिया एवं प्रवृत्ता - "म्याक्यू-सुरक्षा-दलस्य चत्वारः अधिकारिणः राष्ट्रध्वजं पुटीकृत्य पोर्चुगीसीयाय राष्ट्राध्यक्षाय (गवर्नर्) वास्को रोजा वियारावर्याय समर्पितवन्तः । वियारावर्यः तं ध्वजम् उरःसमीपे स्थापयित्वा राजभवने विषादमिश्रितां दृष्टिं प्रसारितवान्, यच्च १९९१ तमवर्षस्य एप्रिल्मासतः तदीयः कार्यालयः आसीत् । 'राष्ट्राध्यक्षः एतं ध्वजं लिस्बोनगरं नीत्वा तत्रत्ये सांस्कृतिक-संशोधन-संस्थाने स्थापयिष्यति' इति तत्र घोषितम् ।"

पोर्चुगल्-अध्यक्षः जार्ज् साम्पियोवर्यः एतां घटनाम् अभिलक्ष्य अवदत् - "अहं विविध-भावशबलितां संवेदनाम् अनुभवामि । अद्य पञ्चशतवर्षात्मकस्य इतिहासस्य घटनाः चलचित्र-दृश्यानि इव मम नेत्रयोः पुरतः आगत्य गताः क्षणाभ्यन्तरे" इति ।

विचित्रा खलु कालस्य गतिः ?





# पनामाकुल्यायाः स्वाम्यपरिवर्तनम्








अत्याश्चर्यकरत्वेन ख्याताः अपि विषयाः कालवशात् सामान्यतां गच्छन्ति क्वचित् । एतस्य एकम् उदाहरणं - पनामाकुल्या । १९१४ तमे वर्षे यदा सा निर्मिता तदा ऐतिहासिकी अपूर्वा सिद्धिः इति जनैः वर्णितम् । ५० मैल्दीर्घा एषा अट्लाण्टिक्सागरं फेसिफिक्सागरेण संयोजयति । एतस्याः निर्माणावसरे ६०,००० जनाः प्राणैः वियुक्ताः अभवन् । एतस्याः निर्माणस्य अनन्तरं न्यूयार्क्तः स्यान्फ्रान्सिस्को-नगरं प्रति प्रयाणस्य मार्गस्य दैर्घ्ये ६००० मैल् न्यूनानि जातानि । अतः वस्तूनां नयनसमये सुमहत् सौलभ्यं सिद्धम् । महान् समयः सञ्चितः जातः ।

अमेरिकाध्यक्षस्य रूसवेल्टस्य कल्पना-शिशुः एव पनामाकुल्या । निर्माणानन्तरं सः स्वयम् एतया कुल्यया प्रयाणं कृतवान् । ततः पूर्वं कोऽपि अमेरिकाध्यक्षः स्वस्य अधिकारावधौ एवम् अन्यदेशं प्रति गतः न आसीत् ।

अमेरिकादेशेन निर्मितायाः एतस्याः स्वाम्यम् अमेरिकाधीनं जातम् । कुल्यायाः तीरयोः अमेरिकीयाणां वसतयः निर्मिताः । एतस्याः तीरे स्थिते अरण्ये तैः शस्त्राभ्यासः कृतः । विविधाः अण्वस्त्रप्रयोगादयः कृताः । अरण्ये उपलभ्यमानानां काष्ठादीनां निमित्तं स्थानीयाः बहवः मारिताः । पनामाजनाः एतस्य विरोधं कृतवन्तः । ..... एवं पनामाकुल्यां परितः प्रवृत्ताः बह्व्यः घटनाः ।

किन्तु अद्य पनामाकुल्यायाः तत् पूर्वतनं महत्त्वम् अपगतं दृश्यते । अद्य प्रपञ्चे वस्तूनां नयनानयनं विमानेन स्थलमार्गेण वा प्रचलति । आधुनिक्यः बह्व्यः नौकाः स्थौल्यकारणतः एतस्यां कुल्यायां प्रयाणं कर्तुं न अर्हन्ति । पनामीयाः जनाः एतस्याः कुल्यायाः स्वाम्यम् इच्छन्तः सन्ति । अतः १९७७ तमे वर्षे अमेरिकाध्यक्षः जिम्मीकार्टरः स्वाम्य-परिवर्तनसम्बन्धिनि सन्धिपत्रे हस्ताक्षरं कृतवान् । गतस्य डिसम्बर्मासस्य ३१ तमे दिनाङ्के स्वाम्यसमर्पणसमारम्भः प्रवृत्तः ।






नवशतकस्य
अरुणोदयकाले...

- भारतीया परम्परा

प्रपञ्चे बह्व्यः नागरिकताः अभवन् । किन्तु भारते यादृशी नागरिकता संस्कृतिः वा आ सहस्रवर्षेभ्यः अनुवर्तमाना अस्ति तादृशी न दृश्यते अन्यदेशेषु । एषा सांस्कृतिकधारा कथम् अविच्छन्नतया प्रवहति ? विविधाः आख्यायिकाः, इतिहासगतानां महापुरुषाणां व्यक्तिचित्राणि च एतत् रहस्यम् उद्भेदयन्ति ।

- भारतम् - पूर्वम् इदानीं च

गौहातीनगरं पूर्वं प्राग्ज्योतिषपुरम् इति किमर्थं निर्दिश्यते स्म ? यत्र पूर्वं विकीर्णबिन्दवः इव केचन भूप्रदेशाः आसन्, तत् मुम्बयीनगरं कथं महानगरत्वेन विकसितं जातम् ? दीर्घजीवनयुक्तानि नगराणि भारते एव अधिकप्रमाणेन सन्ति । तादृशानां नगराणाम् इतिहासः, तद्विषये श्रूयमाणाः कथाः च अतिरोचिकाः ।

- उत्तम-सन्तोषयुक्त-जीवनस्य प्राप्त्यर्थम् .....

एषः विभागः आकर्षकाणि व्यावहारिकाणि च जीवनसूत्राणि ज्ञापयति । तेनैव सह समाजे कथं जनप्रियता प्राप्तृत्या, कथं च विपरीतस्थितौ अपि दृढतया स्थातुं शक्यते इत्यादयः विषयाः अपि चर्च्यन्ते ।

- अद्यतनजगत्

समकालिकघटनानां विषये कटाक्षपातः ।

- अनुद्भिन्नानि रहस्यानि

'येति'नामकः जीवी हिममानवः वा किम् अस्ति ? बर्मुडाखाते कथं महानौकाः अदृश्यतां गच्छन्ति ? यानि रहस्यानि जनान् मूर्खान् कुर्वन्ति तेषां वस्तुस्थितिविषये दृष्टिपातः ।

- तत्तन्मासीयाः महापुरुषाः

तत्तन्मासे जन्म प्राप्तवतां महापुरुषाणां व्यक्तित्वस्य सिद्धीनां च परिचयः ।

- भारतस्य अधिगमनम्

भारतस्य परम्परां, संस्कृतिं, साहित्यं च अधिकृत्य रसप्रश्नाः ।

**एतैरेव सह रोचिकाः संस्काराधायिकाः च षडधिकाः कथाः !!**

एतदतिरिच्य भवतां भाषापरिष्कारार्थम् उपायाः,? रसवार्ताः, महापुरुषाणाम् उक्तयः इत्यादयः अपि !

**चन्दमामा - २०००** - भवतां जीवन-सहगामिनी, नवदिगन्तस्य मार्गदर्शिका चापि ।



# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५





युक्ता शीर्षिका फेब्रवरी-२५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य एप्रिल्मासे प्रकाशयिष्यते ।

## अ भि न न्द ना नि



*कासुचित् प्रतिकृतिषु शीर्षक-प्रेषणार्थं मुद्रणीयानि चित्राणि न मुद्रितानि इत्यतः 'डिसेम्बर्'-मासस्य परिणामः अत्र न उद्घोषितः । प्रमादार्थं क्षन्तव्याः वयम् ।*

***- सम्पादकः***



चन्दमामायाः वार्षिकं ग्राहकशुल्कं -
भारते रू.१२० - ००

Payment in favour of CHANDAMAMA INDIA LIMITED for details address you enquires to:
Publication Division, Chandamama Buildings, Vadapalani, Chennai–600 026






"I want the very best for my home. Nothing but a Sumeet will do"

payal rajaratnam
corporate executive

# Sumeet. loved by millions. worldwide.



"Even my brother in Australia depends on a Sumeet"

aila sharma
fashion designer

"Whatever the task, I know my Sumeet won't let me down"

ritika banker
interior designer



"Sumeet is the best. I recommend it"

tripta khanna
housewife





"The Sumeet is very popular even in Sri Lanka"

sujaya menon
business consultant

Whether it's for grinding chick peas in the West Indies or coffee beans in New Zealand, ice kachang in Malaysia or peanut butter in the U.S. millions of customers trust only a Sumeet. If you want the best the world has to offer, bring home a Sumeet today!



**DOMESTIC**
India's first mixer grinder



**ASIA KITCHEN MACHINE**
The world's toughest mixer-grinder



**DOMESTIC PLUS**
The family mixer-grinder

**Sumeet®**

STRONG & RELIABLE



Sumeet Marketing Centre, 571, Anna Salai, Chennai 600 018. Tel : 044-4343316 / 4348123 / 4349755. Fax : 044-4341479 / 4917213